एतस्याः अखण्डशिलायाः उपरि सन्ति त्रीणि मन्दिराणि, तेषु एकम् अस्ति अतिपुरातनम्, यच्च दीर्घकालिकीं स्थितिं ज्ञापयति ।

शिलैषा ८३ मीटरात्मिका, ३८०० लक्षवर्षेभ्यः पूर्वम् उत्पन्ना च । हिमालयात् अपि पुरातनी एषा । पल्लवराजाः नायकवंशीयाः राजानः च एतां शिलां मन्दिराणाम् आधारशिलां कृतवन्तः । एतस्यां गुहाः निर्मितवन्तः । एतदवलम्ब्य दुर्गमपि रचितवन्तः । आ बहोः कालात् तिष्ठन्ति एतानि मन्दिराणि । एषा शिला उच्यते 'शिलादुर्गम्' (Rockfort) इति । विरामदिनेषु सन्दृश्यताम् एतत् । एतदस्ति तमिळ्नाडुराज्ये तिरुचिजनपदे ।

किं न दृष्टानि प्राचीनानि कौतुकानि एतावतापि ?

enchanting tamil nadu







# ओलम्पिक्प्रश्नस्पर्धा

nutrine

विशेषपारितोषिकम्



'एसर्'सङ्गणकम्

प्रथमपारितोषिकाणि

चित्रग्राहकाणि

द्वितीयपारितोषिकाणि

गणकयन्त्राणि

न्यूट्रिन्चन्दमामा-ओलम्पिक्-प्रश्नस्पर्धा एषा अन्तिमा । अधः दत्ताः क्रीडासम्बद्धाः प्रश्नाः भवतां ज्ञानम् अभिरुचिं च वर्धयिष्यन्ति । अधः स्थिते प्रश्नपत्रे समुचितानि उत्तराणि विलिख्य पञ्चभिः 'न्यूट्रिन् चोकलेट् एक्लियर्स्'-आवरणैः सह अन्तिमदिनाङ्कात् पूर्वं Nutrine Chandamama Contest, Chandamama India Limited No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097 इत्येतस्मै सङ्केताय प्रेष्यन्ताम् ।

एषा अखिलभारतीयस्पर्धा । प्रथमपारितोषिकाणि - ३ कोनिकाचित्रग्राहकाणि । द्वितीय-पारितोषिकाणि - १० गणकयन्त्राणि । तृतीयपारितोषिकाणि - ५० न्यूट्रिन्मधुरपुटकाः । पञ्चानां स्पर्धानाम् अनन्तरं षष्ठस्पर्धायां विशेषपारितोषिकत्वेन 'एसर्'सङ्गणकं दास्यते । अन्यानि सामान्यपारितोषिकाणि अपि भवन्ति एव । षट्सु मासेषु स्पर्धायां भागम् ऊढवन्तः सर्वे विशेषपारितोषिकप्राप्तये अर्हाः । विशेषपारितोषिकं प्राप्तवते डिसेम्बर्मासे सूचना प्रेषयिष्यते ।

## न्यूट्रिन्चन्दमामा-ओलम्पिक्प्रश्नस्पर्धा - ६

सावधानतया अधः दत्तान् सर्वान् प्रश्नान् पठित्वा प्रतिप्रश्नम् उत्तरलेखनाय कल्पिते स्थले समुचितस्य उत्तरस्य पुरतः (✔) चिह्नम् अङ्कयन्तु ।

१. ओलम्पिक्-अङ्गतया प्रवृत्तायां कस्यां स्पर्धायां भारतेन एतावता अष्ट स्वर्णपदकानि प्राप्तानि ?
☐ भारोन्नयनम् ☐ टेन्नीस् ☐ हाकी

२. सः भारतीयः हाकीक्रीडापटुः कः, यश्च १९२८ तमे वर्षे, १९३२ तमे वर्षे, १९३६ तमे वर्षे च ३६ गोलस् प्राप्तवान् ?
☐ धनराज पिळ्ळै ☐ मिल्कासिङ्ग् ☐ ध्यानचन्द्रः

३. २००० तमे वर्षे सिड्नी-ओलम्पिक्स्पर्धासु का भारतीयमहिला भारोन्नयनस्पर्धायां कांस्यपदकं प्राप्तवती ?
☐ कुञ्जुरानीदेवी ☐ कर्नम् मल्लेश्वरी ☐ शिनी विल्सन्

४. ओलम्पिक्क्रीडासु का महिला 'डिस्कस्'क्षेपणस्पर्धायां विश्वविक्रमं साधितवती ?
☐ मार्टिना हेल्लमन् ☐ इलोना स्लुपियानेक् ☐ ट्रिनी हुड्स्ट्ह

५. एतस्य मासस्य न्यूट्रिन्विज्ञापिकायां 'Y' इत्येतत् आङ्ग्लाक्षरं कतिवारम् आवृत्तम् अस्ति ?
☐ चतुर्वारम् ☐ त्रिवारम् ☐ द्विवारम्

**किं भवन्तः जानन्ति?**



रज्ज्वाकर्षणस्पर्धा १९०० तमे वर्षे पेरिस्नगरे प्रवृत्तायां स्पर्धायाम् आरब्धा । अनन्तरेषु पञ्चसु एव वर्षेषु सा प्रवृत्ता च ।

**स्पर्धानियमाः** - ● न्यूट्रिन्-चन्दमासंस्थयोः उद्योगिनः तेषां बान्धवाः वा स्पर्धायां भागवहनाय अनर्हाः । ● न्यूट्रिन्संस्था निर्णायकानां चयने पूर्णाधिकारम् अर्हति । ● भारते जाताः ऊनपञ्चदशवर्षीयाः बालाः स्पर्धायां भागं वोढुम् अर्हाः । ● स्पर्धादिनाङ्कस्य विस्तारे सङ्कोचे च न्यूट्रिन्जनानाम् एव अन्तिमः अधिकारः । ● भागग्राहिणः वयसः दृढीकरणाय जन्मदिनाङ्कप्रमाणपत्रं दद्युः । ● समुचितोत्तरदातारः बहवः सन्ति चेत् 'लाटरी'पद्धत्या पारितोषिकार्हाणां चयनं करिष्यते । ● पारितोषिकभाजः पत्रेण सूच्यन्ते । ● पारितोषिकं वस्तुरूपेणैव, न तु धनरूपेण । ● पारितोषिकरूपेण दत्तानां वस्तूनां 'वारण्टी' निर्मातृसंस्थाधीनम् । ● एकः एव प्रतिमासम् अपि भागं ग्रहीतुम् अर्हति । ● षट्सु मासेषु कस्मिंश्चित् एकस्मिन् एव भागग्रहणम् अपि शक्यते । ● पत्रव्यवहारस्य न अवकाशः । ● स्पर्धापत्रं प्रेषितम् इत्यस्य तात्पर्यं यत् स्पर्धानियमाः सर्वे अङ्गीकृताः इति । ● अन्तिमदिनाङ्कानन्तरं प्राप्तं प्रवेशपत्रं स्पर्धायै न परिगण्यते । ● समुचितम् उत्तरं केनापि न दत्तं चेत् अल्पदोषयुक्तानि पत्राणि पारितोषिकाय परिगण्यन्ते । ● निर्णायकानां निर्णयः एव अन्तिमः ।

**अन्तिमः दिनाङ्कः - ३१, अक्टोबर् - २००४**

नाम ..............................................................

वयः .................. कक्ष्या .................. जन्मदिनाङ्कः ..................

गृहसङ्केतः (पिन्कोड्सहितः) ..............................................................

..............................................................

हस्ताक्षरम् ..............................






# एतस्य अङ्कस्य विशेषाः

सम्पुटः - २१ अक्टोबर् - २००४ सञ्चिका - ७



















## अन्तरङ्गम्



**ग्राहकशुल्कम्** -
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -

**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers
Colony, Ekkatuthangal,
**CHENNAI - 600 097**
E.mail : subscription@chandamama.org

**ग्राहकशुल्कविवरणम्**
वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**
**भारते रू. १४४/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



संस्थापकौ -
चक्रपाणिः, बि.नागिरेड्डिः च

# योग्यानां ग्रहणम् इदानीम् एव स्यात्

यदा राज्यवर्धनसिङ्गराथोडः अथेन्सीयायां स्पर्धायां राजतपदकम् आसादितवान् तदा इतिहासस्य नूतनस्य पुटस्य आरम्भः जातः इति वक्तुं शक्नुमः । यद्यपि आधुनिकशैल्या स्पर्धानाम् आरम्भः १०८ वर्षेभ्यः पूर्वं जातः, तथापि वैयक्तिकम् ओलम्पिक्रजतपदकं तु एतस्मिन् एव वर्षे प्राप्तं भारतेन ।

वैयक्तिकस्पर्धासु अस्माकं क्रीडापटुभिः कांस्यपदकानि इतः पूर्वं प्राप्तानि आसन् । समूहप्रयत्नात्मिकायां हाकीस्पर्धायां सुवर्णपदकम् अपि आसादितम् आसीत् । किन्तु पूर्वं या पटुता दर्शिता सा इदानीं परिरक्षिता न दृश्यते इति तु अतिरस्कारार्हं कटुसत्यम् ।

अथेन्स्नगरे प्रवृत्तानां स्पर्धानां समाप्त्युत्तरकालीनविमर्शेन न किमपि प्रयोजनम् । भविष्यस्य विषये किं करणीयम् इति चिन्तनीयम् अस्माभिः । वैश्विकः स्तरः अस्माकं क्रीडापटुभिः कथं सम्पादयितुं शक्यः, कीदृशं प्रशिक्षणम् एतदर्थं व्यवस्थापनीयम् इत्यादयः अंशाः अस्माभिः अवश्यम् अवधेयाः ।

अस्माकं देशे क्रीडासंस्थानानि सन्ति एव । किन्तु तानि विशेषप्रशिक्षणमात्रम् एव चिन्तयन्ति, न तु सामान्यशिक्षणम् अधिकृत्य । एताभिः संस्थाभिः गुणस्तरः, पदवी-प्रदानम्, उद्योगावकाशकल्पनम् इत्यादीनां विषये अपि चिन्तनीयम् । इदानीं तु क्रीडाक्षेत्रे प्रशिक्षणस्य आद्यता अत्यल्पा एव कल्पिता दृश्यते ।

भारतेन इतः पूर्वं त्रिवारम् एशियन्क्रीडाः व्यवस्थापिताः । अग्रिमे २०१० तमे वर्षे कामन्वेल्थ्क्रीडास्पर्धाः आयोजनीयाः सन्ति अपि । एतादृश्यां स्थितौ ओलम्पिक्-स्पर्धासु अस्माभिः एकमेव पदकं यत् प्राप्तं तत् तु न भूषणम् । एषा स्थितिः परिवर्तनीया चेत्, देशस्य गौरवं वर्धनीयं चेत्, योग्यानां ग्रहणम् इदानीम् एव चिन्तनीयम् । अन्यथा वयम् अवकाशात् वञ्चिताः स्याम ।

*सम्पादकः* - **विश्रम्**



# वनजातिबालानां कृते नूतनपत्रिकायाः उदयः




सन्थालीभाषायाः आवृत्तिं प्रकाशयन्त्या, ५७ वर्षात्मकेन इतिहासेन युक्ताया चन्दमामया प्रकाशनक्षेत्रे एकं नूतनं त्रैविक्रमं पदं निहितम् अस्ति ।

वनजातिजनानां भाषया प्रकाश्यमाना प्रथमा बालमासिकी अस्ति एषा । बहुवर्णात्मिका एषा गुरुगोम्केपण्डितरघुनाथमुर्मुवर्येण विकासितया ओल्चिकीलिप्या मुद्राप्यते ।

एतस्याः आवृत्तेः प्रथमा सञ्चिका वर्षस्यास्य अगस्ट्मासस्य १५ दिनाङ्के भुवनेश्वरे ओरिस्साराज्यस्य मुख्यमन्त्रिणः साहसबहुलं कार्यं तेन बहुधा प्रशंसितम् । वयम् आशिषा अनुगृहीताः अपि तेन । अतः वयम् अधमर्णाः स्मः ।

सन्थालीभाषावृत्तेः प्रकाशनं सन्थालीचन्दमामासमितेः सहयोगस्य प्रोत्साहस्य च कारणतः सिद्धम् । एतस्याः समितेः मुख्या अस्ति विधानसभासदस्या श्रीमती द्रौपदीमुर्मवर्या । एतस्याः समितेः सहकारं वयं कृतज्ञतापूर्वकं स्मरामः । प्रथमावृत्तेः लोकार्पणावसरे एव तया समित्या थक्कर्बापा-आदिवासिच्छात्रावासस्य परिसरे सस्यारोपणकार्यक्रमः अपि आयोजितः आसीत् । तदवसरे छात्रावासपरिसरे बहूनि सस्यानि आरोपितानि अपि ।

अपूर्वायाः एतस्याः बालमासिक्याः उद्भवावसरे साहाय्यं प्रचारं च दत्तवद्भ्यः पत्रिकाजनेभ्यः दूरदर्शनादिजनेभ्यः चापि वयं कृतज्ञतां समर्पयामः एव ।

– प्रकाशकः

# वाचकानां कृते कथास्पर्धा (मे)

# मन्त्रिणः बुद्धिमत्ता




राज्ञः खेदं ज्ञात्वा बुद्धिमान् मन्त्री कश्चित् उपायम् अचिन्तयत् ।

विजयपुर्याः प्रतिवेशिराज्यं केसरदुर्गं पर्वतैः शिलाभिः च पूर्णम् आसीत् । सर्वदा जलस्य अभावः भवति स्म तत्र । विजयपुरे तु बह्व्यः नद्यः आवर्षं जलेन पूर्णाः भवन्ति स्म । केसरदुर्गस्य राजा चन्द्रकुमारः सर्वदा वदति स्म – अस्मद्राज्याय जलं दीयताम् इति ।

एतां स्थितिं मनसि निधाय मन्त्री राजानम् अवदत् – ''प्रतिवेशिराजः शिलाः सुधां च नेतुम् अस्मभ्यम् अनुमतिं ददाति चेत् वयं जलस्य दानम् अङ्गीकुर्याम । यः गृहं निर्मातुम् इच्छति सः केसरदुर्गतः शिलाः आनीय स्वयं गृहनिर्माणं चिन्तयेत् । शासनेन भूमिः दातव्या । शिलानाम् आनयनाय शकटव्यवस्था अपि करणीया'' इति ।

राज्ञा एषः प्रस्तवः अङ्गीकृतः । ततः मन्त्री प्रासादसमीपे उपस्थितान् मेलयित्वा गृहनिर्माणविषये योजनाम् अकरोत् । सर्वे प्रतिवेशिराज्यतः शिलाः आनीय गृहस्य निर्माणाय सज्जाः जाताः ।

मन्त्री प्रतिवेशिराजस्य पुरतः स्वस्य योजनाम् उपस्थापितवान् । केसरदुर्गस्य राजा मन्त्री च एतं प्रस्तावं श्रुत्वा नितरां सन्तुष्टौ । अचिरात् एव सा योजना व्यवहारपथम् आगता । वर्षाभ्यन्तरे गृहरहितैः सर्वैः गृहाणि निर्मितानि । राज्ञा मन्त्रिणः बुद्धिमत्ता श्लाघिता ।


मिथिलेश बढई, क्वाटर् नं. २/८
३० तमः मार्गः, सेक्टर् – ८, भिलाई (छ-ग)
जि. दुर्ग – ४९१७७१



# भगवत्याः व्यवहारः

सुन्दरी मातृगृहे सुखेन प्रवृद्धा । सा तत्र किमपि कार्यं न करोति स्म । किन्तु पतिगृहे श्वश्र्वाः द्वारा एव सर्वाणि कार्याणि कारयति स्म ।

यदा यदा मातृगृहं गम्यते तदा सर्वदा सा मातरं स्वस्य कष्टं निवेदयति स्म । तदा माता वदति स्म - ''अत्र मया किमपि कार्यं न बोधितं यत् तत् ममैव दोषः । भवत्याः श्वश्रूः तं दोषं परिष्कुर्वती अस्ति । विना कार्यं गृहे उपवेशनं न उचितम् । अतः भवती श्वश्रूम् एव मातरं मत्वा तदनुगुणं व्यवहारं करोतु'' इति ।

किन्तु पिता पुत्र्याः कथनं श्रुत्वा अवदत् - ''श्वश्रूः भवतीं कार्याणि वदतु नाम । न तत्र आपत्तिः कस्यापि । किन्तु विना कारणं तया सदा क्रियमाणं निन्दनं न उचितम् । अहं मम मित्रम् उक्त्वा भवत्याः पत्ये नगरे कमपि उद्योगं दापयिष्यामि । भवती पत्या सह नगरे वसतु । तेन समस्या परिहृता भविष्यति'' इति ।

स्वस्य कथनस्य अनुगुणं पिता जामात्रे नगरे उद्योगं दापितवान् । अतः सुन्दरी पत्या सह नगरे वासम् आरब्धवती । वस्त्रपात्रादीनां क्षालनाय सा भगवतीनामिकां काञ्चित् कर्मकरीं नियोजितवती ।

भगवत्याः व्यवहारः विलक्षणः इव भासते स्म । सुन्दर्याः प्रतिवेशिनी शारदा । तस्याः गृहे भगवती श्रद्धया कार्यं करोति स्म । शारदायाः गृहे जनाः अधिकाः । अतः तत्र कार्यम् अपि अधिकम् एव । तथापि भगवती तत्र विना वचनं सर्वाणि कार्याणि करोति स्म । सुन्दर्याः गृहे कार्यं तु अत्यल्पम् एव । तथापि 'अत्र कार्यम् अधिकम्' इति सदा वदन्ती भवती स्म सा ।

एतस्मिन् एव काले सुन्दर्याः श्वश्रूः वार्ता प्रेषितवती यत् अहं नगरम् आगमिष्यामि,

काञ्चन मासान् स्थास्यामि च इति । एतत् ज्ञात्वा सुन्दरी भीता । श्वश्रूः आगमिष्यति इति विषये तस्याः भीतिः न । भीतिः तु आसीत् कर्मकर्याः विषये ।

श्वश्रूः दर्पं दर्शयन्ती कार्यं कारयति स्म, लघुषु अपि अंशेषु दोषं दर्शयन्ती तर्जयति स्म । एतत् मौनेन सहते स्म सुन्दरी । किन्तु भगवती अन्येन कृतं तर्जनं न सहते । सा अपि प्रतिवचनं वदति स्म कठोरस्वरेण एव । कार्यम् अधिकम् अत्र इति वदन्ती या पूर्वं कोपं करोति स्म तस्याः कोपः इतोऽपि प्रवृद्धः श्वश्र्वाः आगमनानन्तरम् । 'भवतां गृहस्य कार्यं त्यक्ष्यामि' इति पुनः अवदत् सा ।



'यदि एषा त्यक्ष्यति तर्हि अन्यस्याः प्राप्तिः कष्टाय भवेत् । तदा मया एव सर्वं गृहकार्यं करणीयं भविष्यति' इति चिन्तनम् आसीत् सुन्दर्याः ।

सुन्दरी स्वस्य चिन्तनं पतिं निवेद्य अवदत् – ''श्वश्रूः मम वचनं न शृणोति । भवान् एव तां वदतु – भगवत्या सह कलहः न करणीयः इति'' इति ।

पतिः अभयः कदाचित् मातरम् अवदत् – ''अम्ब ! गृहकार्येषु साहाय्यं भवतु इति उद्देशेन भगवती कार्ये नियोजिता अस्माभिः । नगरवासिनां स्वभावः ग्रामवासिनां स्वभावतः भिन्ना भवति । स्वस्य तर्जनं न सहन्ते ते । यदि भगवत्या सह सहनया व्यवहारः क्रियेत तर्हि भवती यावन्ति दिनानि तिष्ठेत् तावन्ति दिनानि सुखेन भवेत् । यदि सा अस्मद्गृहं त्यजेत् तर्हि महत् कष्टम् आपतेत् । भवत्याः स्नुषा न जानाति यत् कर्मकरीणां विषये कथं व्यवहारः भवेत् इति । भवत्या एव विचिन्त्य व्यवहरणीयम्'' इति ।

अभयस्य माता बुद्धिमती एव । स्नुषा एव एवं वाचितवती इति सा अवगतवती एव । 'कर्मकरी भगवती कार्यात् निष्कासिता चेत् एतस्याः दण्डनं भवितुम् अर्हति' इति अचिन्तयत् सा ।

अतः सा विना कारणं भगवतीं बहुधा तर्जितवती । तथापि भगवती विना प्रतिवचनं शृणोति स्म । अभयस्य माता तु तस्याः तर्जनम् अधिकीकृतवती ।

कानिचन दिनानि एवमेव अनुवृत्तम् । एकदा भगवती अभयस्य मातरं कोपेन अवदत् – ''भवती माम् एवमेव तर्जयति चेत् अहं गृहस्य कार्यं परित्यज्य गमिष्यामि'' इति ।



''किं मां भाययति भवती ? गच्छतु नाम । अहं स्नुषायाः द्वारा गृहस्य सर्वाणि कार्याणि कारयिष्यामि'' इति अवदत् अभयस्य माता ।

एतत् श्रुत्वा भगवती मौनम् आश्रितवती । सुन्दर्याः श्वश्रूः तस्याः द्वारा बहूनि कार्याणि कारयति स्म । तथापि तानि सा आनन्देन करोति स्म ।

अथ कदाचित् सा सुन्दरीम् अवदत् - ''भवत्याः श्वश्र्वाः आगमनस्य अनन्तरं मम श्रमभारः न्यूनः जातः । सा अत्रैव यदि तिष्ठेत् तर्हि मम सन्तोषः भवेत्'' इति ।

एतत् श्रुत्वा सुन्दरी आश्चर्येण स्तब्धा जाता । भगवती कार्यत्यागं न उच्चारयति इत्यतः तस्याः महान् सन्तोषः ।

सा कदाचित् पतिम् उक्तवती - ''भवतः माता यथापूर्वं व्यवहरति । तस्याः स्वभावे न किमपि परिवर्तनम् । सा यावदिच्छं तावत् अत्र वसतु नाम । भगवती सर्वाणि कार्याणि आनन्देन कुर्वती अस्ति'' इति ।

अभयः मातुः स्वभावं सम्यक् जानाति स्म । अतः तद्विषये तस्य आश्चर्यं किमपि न जातम् । किन्तु भगवत्याः व्यवहारः तु तस्मिन् आश्चर्यम् अजनयत् । तस्याः व्यवहारस्य कारणं न ज्ञातं तेन ।

एवमेव मासद्वयम् अतीतम् । सुन्दर्याः श्वश्रूः ग्रामगमनस्य विषयम् एव न उत्थापितवती । सुन्दरी अपि एतद्विषये आक्षेपं न कृतवती । सुन्दर्याः श्वश्र्वा अधिकं तर्जनं क्रियते स्म चेदपि भगवती तु आनन्देन एव कार्यं करोति स्म सर्वदा ।

कदाचित् प्रतिवेशिनी शारदा सुन्दर्याः श्वश्र्वा मन्दिरे मिलिता । उभे अपि मन्दिरस्य पुरतः वृक्षस्य अधः उपविष्टवत्यौ ।

तदा शारदा सुन्दर्याः श्वश्रूम् अपृच्छत् - ''अहं किमपि प्रष्टुम् इच्छामि । मम प्रश्नं श्रुत्वा भवत्या कोपः न करणीयः । भवती कदा ग्रामं प्रतिगच्छेत् ?'' इति ।

एतत् श्रुत्वा सुन्दर्याः श्वश्रूः असन्तोषेण प्रतिप्रश्नम् अकरोत् - ''ग्रामं प्रति मम प्रतिगमनस्य विषये भवत्याः एतावान् उत्साहः किमर्थम् ?'' इति ।

तदा शारदा विनयेन अवदत् - ''आर्ये ! क्षन्तव्या अहम् । अहं भवत्याः स्नुषायाः समवयस्का एव । अहं त्रयाणाम् अपत्यानां माता अस्मि । अतः गृहकार्यनिर्वहणे महान्तं क्लेशम् अनुभवामि अहम् । भवत्याः गृहे या कार्यं करोति सा भगवती एव मम गृहे अपि कार्यं करोति । तस्याः स्वभावः नितरां विलक्षणः । कोऽपि गृहस्वामिनीं तर्जयति चेत् सा सन्तुष्टा भवति । मम पत्या तस्याः एषः स्वभावः ज्ञातः । नगरे कर्मकर्याः प्राप्तिः सुदुर्लभा इति जानन् सः मां कृत्रिमैः कोपवचनैः सदा निन्दन् भवति तस्याः पुरतः । एतस्मात् सन्तुष्टा भगवती कार्याणि आनन्देन करोति । मम तु भाति यत् स्नुषायाः निन्दनं भवत्यै विशेषतः रोचते इति । अतः एव भगवती भवत्याः गृहस्य कार्ये विलम्बं न करोति । ततः आनन्दं च अनुभवति । एतस्मात् स्पष्टं यत् तर्जनवचनश्रावणे भवती नितरां दक्षा इति । यत् मम मनसि आसीत् तत् विना सङ्कोचम् उक्तं मया । मां क्षाम्यतु कृपया'' इति ।

एतत् श्रुत्वा श्वश्रूः आश्चर्येण स्तब्धा जाता । मम व्यवहारं दृष्ट्वा जनाः किं किं चिन्तयन्तः स्युः इति अवगच्छन्ती सा लज्जिता अपि । अतः स्नुषायाः विषये तस्याः व्यवहारः अनन्तरदिनेषु नितरां परिवृत्तः । श्वश्र्वां जातं परिवर्तनं दृष्ट्वा सुन्दरी अपि तस्याम् आदरवती जाता । अतः सा गृहकार्येषु स्वयं प्रवर्तते स्म ।

भगवती अपि गृहत्यागप्रस्तावं परित्यक्तवती । प्राप्तं कार्यं परित्यक्तं चेत् अन्यत्र उद्योगप्राप्तिः क्लेशाय इति अवगतवती आसीत् सा ।



# दर्शनात् अस्वास्थ्यम्

दानपुरग्रामे स्थितेषु धनिकेषु सुभाषः अन्यतमः । तस्य उभौ पुत्रौ । ज्येष्ठः पुत्रः सूर्यः द्वादशवर्षीयः । दशवर्षीयः चन्द्रः तस्य द्वितीयः पुत्रः ।

स्वपुत्रयोः विषये सुभाषस्य महती चिन्ता आसीत् । यतः तौ उभौ अपि मन्दबुद्धी आस्ताम् ।

कदाचित् सुभाषस्य बन्धुः कश्चन आगतः । सः सुभाषं सूचितवान् – ''पुत्रयोः विषये भवान् तावतीं चिन्तां न करोतु । अस्माकं ग्रामे कश्चन पण्डितः निवसति । सः मनुष्याणाम् अन्तरङ्गं ज्ञातुं समर्थः अस्ति । छात्रान् योग्यया रीत्या बोधयितुमपि समर्थः अस्ति सः'' इति ।

सुभाषः तं पण्डितं दृष्टवान् । सुभाषस्य पुत्रयोः विषयं सर्वं श्रुत्वा स पण्डितः उक्तवान् – ''मनुष्याः यथा बुद्धिमन्तः, तथैव मुग्धाः अबोधाः चापि भवन्ति । एषा प्रकृतिसहजा स्थितिः । अतः कदाचित् अहमेव भवतः गृहम् आगत्य भवतः पुत्रयोः परीक्षां करिष्यामि'' इति ।

सप्ताहानन्तरं कदाचित् स पण्डितः सुभाषस्य गृहं गतः । तस्मिन् समये सुभाषः पुत्रयोः परिवेषणं कुर्वन् आसीत् । अनतिदूरे एव मरीचिकया निर्मितं खाद्यं किमपि स्थापितम् आसीत् ।

सूर्यचन्द्रौ तत् खाद्यम् दृष्टवन्तौ । तदा सुभाषः अवदत् – ''तत् कटु । तस्य एकः खण्डः खादितः चेदपि अस्वास्थ्यं भवेत् । दर्शनमपि अस्वास्थ्याय भवेत् कदाचित्'' इति ।

बालौ भोजनम् अनुवर्तितवन्तौ । किञ्चित्कालानन्तरं चन्द्रः अवदत् – ''तात ! अग्रजः तत् खाद्यं द्विवारं दृष्टवान् अस्ति । सः निश्चयेन अस्वस्थः भविष्यति एव खलु ?'' इति ।

एतत् श्रुतवान् सः पण्डितः अवदत् – ''भवतः पुत्रयोः एतस्मिन् कनिष्ठे पुत्रे किञ्चित् अधिकबुद्धिमत्ता दृश्यते । तस्य एव पाठनम् आदौ भवतु'' इति ।





# भल्लूकमान्त्रिकः

## १०

[दुर्मुखस्य शिरः कर्तयितुम् उद्युक्तः वधकभल्लूकः उग्रदण्डेन निवारितः । दुर्मुखम् अहं मान्त्रिकसमीपम् आनेष्यामि इति अवदत् सः । वन्यः भिल्लयुवकः वधकभल्लूकेन सह चन्द्रशिलानगरं प्रति गमनाय सन्नद्धः जातः । गजान् आरुह्य आगताः केचन वधकभल्लूकम् अवरुद्धवन्तः । तम् उद्दिश्य बाणप्रयोगम् अपि आरब्धवन्तः ते । तदनन्तरम्... ]

वधकः भल्लूकः अभिमुखम् आगच्छतः बाणान् परशुना निवारयन् स्वस्य वाहनभूतं गजम् अग्रे प्रेरितवान् । अभिमुखं स्थितं गजं शुण्डया प्राहरत् भल्लूकमान्त्रिकस्य गजः । 'जय शिरीषभैरव !' इति वदन् वधकभल्लूकः शत्रुगजं लक्ष्यीकृत्य स्वस्य परशुं क्षिप्तवान् । एतेन शत्रुगजस्य एकः दन्तः कर्तितः जातः । एतदवसरे वधकभल्लूकीयस्य गजस्य उपरि उपविष्टः भिल्लः युवकः अकस्मात् अधः अपतत् ।

वधकभल्लूकस्य गजस्य प्रहारात् भीतः शत्रुगजः ततः पलायनम् अकरोत् । तदा अपरस्य गजस्य उपरि उपविष्टः भटः उच्चस्वरेण अवदत् - ''वयं चिन्तितवन्तः आस्म यत् गजस्य उपरि उपविष्टः भल्लूकवेषधारी सामान्यः कोऽपि स्यात् इति । किन्तु तथा तु नास्ति । युद्धविद्यानिपुणः इव भासते सः'' इति ।

एतावत् उक्त्वा सः स्वस्यापि गजं परावर्तितवान् । वधकभल्लूकः गजात् अधः पतित-



वति भिल्लयुवके दृष्टिम् अपातयत् । स तु भिल्लयुवकः मूर्च्छां गतः आसीत् ।

धावनोद्यतयोः गजयोः पृष्ठतः गत्वा उच्चस्वरेण अवदत् वधकभल्लूकः - ''अये, अहं न हि भल्लूकः । शिरश्छेदरूपं दण्डं प्राप्तवतां शिरः छिन्दन् वधकः अस्मि अहं वृत्त्या । यदि किञ्चित्कालं वा प्राणाः धर्तव्याः इति भवताम् इच्छा, तर्हि धावनं परित्यज्य मम प्रश्नानाम् उत्तरं दीयताम्'' इति ।

वधकभल्लूकस्य आकृतितः एव भीताः आसन् शत्रुसैनिकाः । इदानीं तस्य कठोरं स्वरं श्रुत्वा तु ते नितरां भीताः ।

वधकभल्लूकः स्वकीयं गजं शत्रुगजान् परितः सकृत् परिभ्राम्य स्वस्य परशोः पृष्ठभागेन कस्यचित् गजस्य शिरसि प्रहृत्य तदुपरि उपविष्टं सैनिकम् अवदत् - ''अये, के भवन्तः ? 'दुर्मुखराजः जयतात्' इति जयघोषः कृतः खलु भवद्भिः ? तस्य राज्ञः शिरसः कर्तनं प्रतिज्ञातम् अस्ति मया । तच्च शिरः मदधीनम् अस्ति अपि'' इति ।

तदा सः शत्रुसैनिकः शिरः अवनमय्य प्रणामं कुर्वन् वधकभल्लूकम् अवदत् - ''वयं यस्य नाम उच्चार्य जयघोषं कृतवन्तः स तु उदयगिरेः राजा । अस्माभिः श्रुतं यत् कश्चन गजारोही तं बन्दीकृत्य नीतवान् इति । तं मोचयितुं वयम् अत्र आगताः स्मः'' इति ।

एतत् श्रुत्वा वधकभल्लूकः आश्चर्येण अवदत् - ''स्वस्य महाराजं बन्धनात् मोचयितुं किं भवन्तः चत्वारः एव एतत् घोरारण्यं प्रति आगताः ? नितराम् आश्चर्यकरम् एतत्'' इति ।

एतत् श्रुत्वा तत्रत्याः परस्परं मुखं दृष्टवन्तः । वधकभल्लूकः स्वस्य गजस्य उपरि उपविशन् एव परशुं चालयन् अवदत् - ''अये ! भवन्तः यदि सत्यं न वदेयुः तर्हि अहम् एतेन परशुना भवतां गजस्य कुम्भस्थलं विदारयिष्यामि । अन्येषां गजानां स्थितिः अपि एषा एव भविष्यति'' इति ।

तदा तेषु सैनिकेषु अन्यतमः अवदत् - ''भल्लूकमहाराज ! दुर्मुखराजस्य सिंहासनं सूर्यभूपतिः नाम सामन्तराजः स्वायत्तीकृतवान् अस्ति । तदवसरे यत् युद्धं प्रवृत्तं तत्र कथमपि आत्मानं रक्षित्वा वयं महाराजम् अन्विष्यन्तः अत्र आगतवन्तः स्मः'' इति ।

''भवतां राजभक्तिः प्रशंसार्हा एव । यस्य राज्ञः निमित्तं भवन्तः एतावत् कष्टम् अनुभवन्तः सन्ति सः चन्द्रशिलाराज्यं वशीकर्तुम् उद्युक्तः सन् मध्येमार्गं कस्यचित् मान्त्रिकस्य,

कालीवर्मनामकस्य वीरस्य च अपमाननं कृत्वा कष्टगर्ते पतितः अस्ति । सः सप्राणम् उदयगिरिराज्यं प्राप्नुयात् इति न भाति मम । अतः भवन्तः अन्यस्य कस्यचित् राज्ञः आस्थानं प्रविशन्ति चेदेव वरं स्यात्'' इति अवदत् वधकभल्लूकः ।

तावता राज्ञः दुर्मुखस्य अङ्गरक्षकः धावन् तत्र आगत्य अवदत् - ''वधकभल्लूकप्रभो ! भवन्तम् अनुसृत्य प्रस्थिताः वयं गजानां घीङ्कारध्वनिं श्रुत्वा चिन्तितवन्तः यत् कोऽपि वन्यः गजः भवतः गजस्य गमनम् अवरुद्धवान् स्यात् इति । वस्तुस्थितिं ज्ञातुम् अहम् अत्र आगतः'' इति ।

अत्रान्तरे भिल्लतरुणः सचेतनतां गतः आसीत् । सः झटिति उत्थाय धनुः उन्नीय शत्रुसैनिकं लक्ष्यीकृत्य बाणप्रयोगाय सज्जः सन् अवदत् - ''भल्लूकवर्यं निरोद्धुं साहसं कृतवान् सः कः ?'' इति ।

''महाशय, अङ्गरक्षक ! कृपया अस्मान् रक्षतु'' इति वदन्तः सैनिकाः गजात् अवतीर्णवन्तः ।

'अङ्गरक्षक इति मां सम्बोधयन्तः एते के ?' इति चिन्तयन् अङ्गरक्षकः तान् आश्चर्येण क्षणकालं दृष्टवान् । तदा तेन सैनिकाः अभिज्ञाताः । सः तान् उद्दिश्य - ''अये ! भवन्तः ! नगरं परित्यज्य किमर्थम् एतत् अरण्यं प्रति आगतं भवद्भिः ?'' इति आश्चर्येण प्रश्नं कृतवान् ।

एतं प्रश्नं श्रुत्वा उच्चैः हसन् भल्लूकमान्त्रिकः अवदत् - ''अहो, विलक्षणः प्रश्नः एषः ! अचिरात् एव भवतां महाराजः परलोकं



गमिष्यति । तादृशाय राज्ञे नगरं किमर्थम् अपेक्षितम् ?'' इति ।

तस्मिन् एव समये दुर्मुखः तत्र उपस्थितः । तेन सह राक्षसः उग्रदण्डः लुण्ठाकाः च आसन् । राजा दुर्मुखः तान् सैनिकान् दृष्ट्वा आश्चर्येण अपृच्छत् - ''अये, भवन्तः अत्र किमर्थम् आगताः ?'' इति ।

यावत् सैनिकाः किमपि वक्तुम् उद्युक्ताः तावता वधकभल्लूकः एव गजात् अवतीर्य अवदत् - ''दुर्मुख ! भवता यः प्रश्नः पृष्टः सः एव भवतः अङ्गरक्षकेण अपि पृष्टः । तस्य उत्तरम् अहं वदामि, शृणोतु । भवदीयं राज्यं केनचित् सामन्तेन वशीकृतम् अस्ति'' इति ।

''मम राज्यं वशीकृतवान् सः सामन्तः कः ? मम तु एकः एव सामन्तः अस्ति । स च सूर्यभूपतिनामकः । भवन्तः दुर्गम् अन्याधीनं



कृत्वा भीरवः इव अत्र किमर्थम् आगताः ? एषोऽहं भीरूणां भवतां शिरः छेदयिष्यामि'' इति अगर्जत् दुर्मुखः ।

तदा उग्रदण्डः एकं पदम् अग्रे स्थापयित्वा दुर्मुखस्य हस्तं गृहीत्वा तं खड्गप्रयोगात् निवारयन् अवदत् – ''दुर्मुख ! अलं त्वरया । आदौ भवान् मान्त्रिकात्, वधकभल्लूकात् च आत्मनः रक्षणं चिन्तयतु । तदनन्तरम् एव दुर्गस्य रक्षणविषये चिन्तनम्'' इति ।

एतानि वचनानि श्रुत्वा दुर्मुखः शान्तः जातः । उग्रदण्डस्य हस्तद्वयं गृहीत्वा सः अवदत् - ''महाप्रभो, उग्रदण्डवर्य ! मम मरणं तु निश्चितम् एव । राजत्वप्राप्तेः अनन्तरम् एव मम मरणं भवतु नाम । भवतः साहाय्येन तस्य दुष्टस्य सामन्तस्य शिरः कर्तयित्वा दुर्गतोरणे बन्धयिष्यामि । तदनन्तरम् अहम् आत्मसन्तोषेण एव भल्लूकमान्त्रिक-समीपं गमिष्यामि मान्येन वधकभल्लूकेन सह'' इति ।

दैन्येन एवम् उक्तवति दुर्मुखे उग्रदण्डस्य करुणा उत्पन्ना । सः वधकभल्लूकसमीपं गत्वा अवदत् - ''अये वधकभल्लूक ! दुर्मुखः यत् प्रार्थयते तस्य पूरणे न कापि आपत्तिः दृश्यते मम । अतः तस्य अभ्यर्थनां किम् अङ्गीकरवाम वयम् ?'' इति ।

वधकभल्लूकः क्षणकालं विचिन्त्य सर्वान् सकृत् दृष्ट्वा - ''भवन्तः सर्वे सम्भूय मां वञ्चयन्तः तु न स्युः खलु ? भवतां वचनं कपटतापूर्णं न स्यात् खलु ?'' इति वदन् खड्गस्य निशितां धाराम् अङ्गुलीभिः सकृत् स्पृष्टवान् ।

वधकभल्लूकः कुपितः भवति चेत् कार्यं विनष्टं भवेत् इति चिन्तयन् उग्रदण्डः मन्दहास-पूर्वकम् अवदत् - ''अये वधकभल्लूकवर्य ! भवतः खड्गस्य तीक्ष्णता कीदृशी इति अत्र विद्यमानाः सर्वे जानन्ति एव । भल्लूक-मान्त्रिकः दुर्मुखस्य शिरः आनेतुम् उक्तवान् इति तु सत्यम् । किन्तु तत् राज्यसहितस्य स्यात् उत राज्यरहितस्य ?'' इति ।

किम् उत्तरं वक्तव्यम् इति अजानन् वधक-भल्लूकः क्षणकालस्य अनन्तरम् अवदत् - ''उग्रदण्डवर्य ! किमपि असम्बद्धं पृच्छन् भवान् मां धर्मसङ्कटग्रस्तं कुर्वन् अस्ति इति भाति । भवतः मनसि यत् अस्ति तत् स्पष्टैः शब्दैः वदतु तावत्'' इति ।

''राजा दुर्मुखः स्वस्य शिरसः रक्षणात् अपि अधिकतया राज्यस्य रक्षणम् एव चिन्तयन् अस्ति इति भाति मम । अतः सः

दुष्टं सामन्तराजं सूर्यभूपतिं यथायोग्यं दण्डयित्वा उदयगिरिराज्यं राज्ञः दुर्मुखस्य एव इति प्रमाणीकर्तुम् इच्छति । यदा सः एतत् साधयिष्यति तदनन्तरं वयं तं भल्लूकमान्त्रिक-समीपं नेष्यामः चेदेव वरं भवेत् इति भाति मम'' इति अवदत् उग्रदण्डः ।

राजा दुर्मुखः करौ योजयित्वा वधक-भल्लूकम् अवदत् - ''आर्य ! वधकभल्लूक-वर्य ! कासाञ्चित् घण्टानाम् अनन्तरं मम मरणं भविष्यति । एतत् तु निश्चितम् । अतः मम एताम् अन्तिमाम् इच्छां पूरयितुं प्रयत्नं करोतु कृपया'' इति ।

वधकभल्लूकः अङ्गीकारपूर्वकं शिरः चालितवान् । तदा भिल्लतरुणः स्वस्य बाणेन वृक्षस्य एकां शाखां कर्तयित्वा भूमौ पातयित्वा अवदत् - ''भल्लूकवर्य ! तं सामन्तराजम् अहं मम बाणानां लक्ष्यं करिष्यामि । सः दुष्टः सामन्तराजः वन्यपक्षिणः मारयित्वा जीवद्भ्यः अस्मभ्यः प्रभूतं करं स्वीकुर्वन् आसीत्'' इति ।

तदा लुण्ठाकनायकः स्वस्य खड्गम् आकृष्य कोपमिश्रितेन स्वरेण अवदत् - ''एषः सूर्य-भूपतिः महादुष्टः । वयं तु प्राणान् पणीकृत्य यात्रिभ्यः यत्किञ्चित् प्राप्नुमः । एषः सूर्य-भूपतिः तु तथा प्राप्तस्य अर्धभागं वशीकर्तुं सैनिकान् प्रेषयति स्म'' इति ।

''एवम् ! तर्हि वयं सर्वे गत्वा सामन्त-राजस्य सूर्यभूपतेः शिरः अपि भल्लूक-मान्त्रिकाय उपायनीकरवाम । उदयगिरिः कुत्र अस्ति ? इतः कियद्दूरे अस्ति तत् ?'' इति उत्साहेन अपृच्छत् वधकभल्लूकः ।



''पादमार्गेण गतं चेत् अर्धघण्टाभ्यन्तरे तत् नगरं प्राप्तुं शक्येत । अहं सर्वेषाम् अग्रे तिष्ठन् मार्गं दर्शयितुम् अर्हामि । वधक-भल्लूकवर्य ! किं भवान् स्वस्य गजस्य उपरि उपवेशनाय अनुमतिं दद्यात् मह्यम् ?'' इति अपृच्छत् भिल्लयुवकः ।

वधकभल्लूकः अङ्गीकारपूर्वकं शिरः चालयन् गजस्य उपरि उपविष्टवान् । राक्षसः उग्रदण्डः राजानं दुर्मुखं स्कन्धे गृहीत्वा उन्नीय भग्नदन्तस्य गजस्य उपरि उपवेश्य वधक-भल्लूकम् उक्तवान् - ''वधकभल्लूकवर्य ! भवतः अनुज्ञा अस्ति इति मत्त्वा दुर्मुखं गजस्य उपरि उपवेशयन् अस्मि । किञ्चित्कालं वा राजत्वेन तिष्ठते दुर्मुखाय गौरवसमर्पणं योग्यं ननु ?'' इति ।

राज्ञा दुर्मुखेन सह अन्यौ सैनिकौ अपि तस्यैव गजस्य उपरि उपविष्टवन्तौ । नागमल्लः,

तदनुचरौ, अन्यौ सैनिकौ च अपरं गजम् आरूढवन्तः । भिल्लतरुणः मार्गं दर्शयति स्म । राक्षसः उग्रदण्डः दीर्घाणि पदानि स्थापयन् तान् अनुसरति स्म ।

अर्धघण्टायाः अनन्तरं ते अरण्यम् अतिक्रम्य कञ्चित् विशालं प्रदेशं प्राप्तवन्तः । विशालं किञ्चन दुर्गं, तस्य पृष्ठतः भवनानि नगरं च दृष्ट्वा राजा दुर्मुखः चिन्तापूर्णेन स्वरेण वधकभल्लूकम् अवदत् - ''भल्लूकवर्य ! तस्य सामन्तस्य अश्वदलं पदातिदलं च अवश्यं भवेत् । वयम् अङ्गुलिगणनीयाः केचन तान् कथं वा सम्मुखीकुर्याम ?'' इति

''एवम् ! भवतः मनसि एषः सन्देहः उत्पन्नः अस्ति ?'' इति स्वगतम् उक्त्वा वधकभल्लूकः स्वस्य परशुम् उन्नीय पृष्ठतः आगच्छन्तम् उग्रदण्डं पश्यन् दुर्मुखस्य सन्देहं श्रावितवान् ।

राक्षसः उग्रदण्डः स्वस्य गदया भूमिं सकृत् प्रताड्य अवदत् - ''वधकभल्लूक ! मम गदा भवतः परशुः च शतशः शत्रून् अपि नाशयितुं समर्थौ स्तः । तथापि अधिकरक्तपातं विना दुर्गस्य वशीकरणं चिन्तनीयम् अस्माभिः । रक्तपातं विना एव तस्य सामन्तस्य ग्रहणाय कोऽपि उपायः अस्ति चेत् वदतु'' इति ।

उग्रदण्डस्य कथनस्य समाप्तितः पूर्वम् एव नागमल्लः अवदत् - ''प्रभो, मया एतदर्थं कश्चन उपायः चिन्तितः अस्ति । अहं मम उभाभ्याम् अनुचराभ्यां सह आदौ दुर्गं प्रविश्य सामन्तराजं वदिष्यामि यत् दुर्मुखराजं बन्दीकृत्य वयम् आनयन्तः स्मः, एतदर्थम् अस्मभ्यं यथोचितं पुरस्कारः दातव्यः इति । तदा सः सूर्यभूपतिः कैश्चित् अङ्गरक्षकैः सह प्रायः भवतां समीपम् आगमिष्यति । तदवसरे तस्य ग्रहणं न क्लेशाय'' इति ।

''अहो, उत्तमः उपायः चिन्तितः अस्ति भवता । नागमल्ल ! अविलम्बेन भवान् अनुचराभ्यां सह राजधानीं प्रविशतु'' इति अवदत् उग्रदण्डः ।

लुण्ठाकनायकः नागमल्लः, तदनुचरौ उभौ च गजं धावयन्तौ यावत् दुर्गस्य द्वारस्य समीपम् आगतवन्तौ तावता अकस्मात् दुर्गद्वारं सशब्दम् उद्घाटितं जातम् । केचन अश्वदलीयाः, पदातयः च ततः बहिः आगतवन्तः ।

- *(अनुवर्तते)*



## वेताल-कथा

# ज्योतिषिकस्य ज्योतिषम्

आरब्धस्य परित्यागेन नार्थः इति चिन्तयन् इव त्रिविक्रमः पुनरपि वृक्षसमीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! एतादृशे घोरे श्मशाने मध्यरात्रे भवान् सधैर्यं यत् सञ्चरति, पौनःपुन्येन विफलता प्राप्ता चेदपि अल्पम् अपि खेदम् अप्राप्नुवान् पुनरपि प्रयत्ने उद्युक्तः भवति यत् तदर्थं भवान् निश्चयेनास्ति श्लाघनीयः । केचन तादृशीम् इच्छां वहन्ति, या च तेषाम् शक्तिम् अतिरिच्य तिष्ठति । तस्याः साधनायै ते शास्त्रम् अवलम्बन्ते । शास्त्रवचनानि वदन्तः ते विलक्षणेन



तर्केण स्ववादं समर्थयन्ति । वस्तुतः तु तेषु तर्कदृष्टिः, मानवस्वभावस्य अवगमने सामर्थ्यं वा न भवति । अतः एव ते जीवने कदाचित् निराशतां प्राप्नुवन्ति । एतस्य उदाहरणरूपेण कस्यचित् ज्योतिषिकस्य कथां श्रावयामि । तां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं बेतालेन कथा आरब्धा -

श्रीरामपुरे निवसतः सीतारामस्य पुत्रः भास्करः । सः सर्वजनप्रियः, सुन्दरः, सुशीलः च । अतः एव, तस्मिन् एव ग्रामे निवसन् महेन्द्रः तं स्वस्य जामातरं कर्तुम् ऐच्छत् ।

किन्तु भास्करः तस्य प्रस्तावं निराकुर्वन् अवदत् - ''अहं तु इदानीं वराटिकामात्रम् अपि न सम्पादयामि । यावत् सम्पादनं न भवति तावत् विवाहचिन्तनं न वरम् । अतः धनसम्पादने यदा मम सामर्थ्यं भविष्यति तदा एव अहं विवाहविषये चिन्तनं करिष्यामि'' इति ।

महेन्द्रः तादृशः धनिकः अपि न, यश्च जामातरं गृहे एव स्थापयित्वा पोषयेत् । तथापि 'भास्कराय पुत्री दातव्या' इत्येताम् इच्छां परित्यक्तुं न सिद्धः सः । सः अचिन्तयत् यत् ज्योतिषिकः मृत्युञ्जयः एतां समस्यां परिहर्तुं शक्नुयात् इति । तस्मात् सः मृत्युञ्जयसमीपं गत्वा सर्वं विवृत्य अपृच्छत् - ''भास्करः कदा धनसम्पादने समर्थः भवेत् इति किं ज्योतिषस्य आधारेण वक्तुं शक्येत ?'' इति ।

मृत्युञ्जयः सीतारामगृहीयाणां महेन्द्रगृहीयाणां च जन्मकुण्डलीम् आनाय्य सम्यक् परीक्ष्य अवदत् - ''यदि भास्करः भवतः पुत्रीं सन्ध्यां परिणीय मतङ्गपुरं गच्छेत् तर्हि प्रभूतं धनं सम्पादयितुं शक्नुयात्'' इति ।

फलज्योतिषे विशेषश्रद्धा न आसीत् भास्करस्य । किन्तु सीतारामस्य तत्रैव विशेषश्रद्धा । अतः सः पुत्रं सानुरोधम् उक्तवान् यत् सन्ध्या परिणेतव्या एव इति ।

तदा भास्करः अवदत् - ''महेन्द्रेण, ज्योतिषियेण मृत्युञ्जयेन च सम्भूय कृतं नाटकम् एतत् । एतस्मिन् मम श्रद्धा नास्ति । अहम् एतं विवाहं न अङ्गीकरोमि'' इति

''वत्स ! मम वचनं शृणोतु । सन्ध्यां परिणीय मतङ्गपुरं गच्छतु । यदि ज्योतिषिकस्य कथनानुगुणं भवता तत्र धनं सम्पादयितुं न शक्येत तर्हि भवान् प्रत्यागच्छतु । भवन्तं भवत्पत्नीं च अहं पोषयिष्यामि । भवता एषः विवाहः निराक्रियेत चेत् पुनः मम मुखं द्रष्टव्यं

नास्ति'' इति कोपेन अवदत् सीतारामः ।

पितुः आज्ञां तिरस्कर्तुम् अशक्नुवन् भास्करः सन्ध्यां परिणीतवान् । विवाहानन्तरं मतङ्गपुरं प्रति गतं तेन ।

निवासाय स्थलम् अन्विष्यन् सः कस्यचित् गृहस्थस्य गृहं गत्वा अवदत् - ''महोदय ! मया ऐदम्प्राथम्येन एतत् नगरं प्रति आगतम् । यदि भवतः गृहे वासाय अवकाशः दीयेत तर्हि अहम् उपकृतः भवेयम् । यदा अहं धनसम्पादनसमर्थः भविष्यामि तदा यथायोग्यं भाटकम् अवश्यं दास्यामि'' इति ।

तदा सः गृहस्थः भास्करं नखशिखान्तं दृष्ट्वा - ''मम गृहं सुविशालम् अस्ति । अतः अत्र भवते वासस्य दानं न क्लेशाय । किन्तु मम इच्छा यत् विवेकिने एव वासावकाशः दातव्यः इति । तस्मात् अहं भवतः विवेकस्य बुद्धिमत्तायाः च परीक्षां कर्तुम् इच्छामि । मया चतुर्भ्यः ऋणं दत्तम् अस्ति । तेषां नाम अस्ति - रामः, सोमः, नागः, किरणश्चेति । ते चत्वारः अपि ऋणम् अप्रत्यर्पयन्तः मां बहुधा पीडयन्तः सन्ति । कस्य समीपं गतं चेत् अद्य अवश्यं धनं प्राप्येत इति किं भवान् वक्तुं शक्नुयात् ?'' इति अपृच्छत् ।

किमपि उत्तरं दातव्यम् एव आसीत् भास्करेण । अतः सः तेषां चतुर्णाम् अपि स्वभावादिविवरणं प्राप्तवान् । सर्वं श्रुत्वा क्षणं विचिन्त्य सः अवदत् - ''महोदय ! भवान् नागस्य गृहं गच्छतु । अद्य धनं सम्पूर्णं प्राप्स्यते भवता'' इति ।

सः गृहस्थः नागस्य गृहं गतवान् । नागः करौ योजयित्वा गृहस्थम् उद्दिश्य - ''श्रीमन् !



भवता स्वयम् आगतम् । धनस्य प्रत्यर्पणाय अहम् एव भवतः गृहं गन्तुम् उद्युक्तः आसम्'' इति उक्त्वा सर्वं धनं प्रत्यर्पितवान् ।

भास्करेण तस्य गृहस्थस्य गृहे आश्रयः लब्धः । तेनैव सह, तेन कृतस्य कार्यस्य वार्ता अपि सर्वत्र प्रसृता । जनाः भावितवन्तः यत् भास्करः महाज्योतिषिकः अस्ति, सः यत् वदति तत् मिथ्या न भवति इति । तस्मात् जनाः बहवः तत्समीपम् आगताः । भास्करः विविधान् प्रश्नान् पृष्ट्वा आवश्यकस्य विषयस्य सङ्ग्रहं कृत्वा लोकज्ञानस्य आधारेण किमपि वदति स्म । तेन यत् उक्तं तत् सत्यम् एव जातं बहुधा । अतः तस्य ख्यातिः प्रवृद्धा ।

एतेन मतङ्गपुरे भास्करस्य जीवनं निरातङ्कं जातम् । कदाचित् पत्नी सन्ध्या पतिम् अवदत् - ''ज्योतिषे भवतः ज्ञानम् असाधारणम् इति



सन्ध्या एतं विचारं निराकुर्वती उक्तवती – ''हनुमान् इव भवान् अपि स्वशक्तिं न जानाति । ज्योतिषिकः मृत्युञ्जयः एव भवतः शक्तिम् अभिज्ञातवान् अस्ति । तस्य सम्मतिं विना ज्योतिषस्य परित्यागः सर्वथा न करणीयः भवता'' इति ।

भास्करः मृत्युञ्जयेन मेलनाय ग्रामं प्रति गन्तुम् उद्युक्तः जातः । तावता मृत्युञ्जयः एव भास्करस्य गृहम् आगत्य – ''मित्र ! ज्योतिष-क्षेत्रे भवता यत् अपूर्वं ज्ञानं प्रदर्श्यमानम् अस्ति तत् तु नितरां श्लाघार्हम् । कदाचित् गभीरं शास्त्राध्ययनं कृतवता अपि यत् वक्तुं न शक्यते तत् अपि भवान् स्वज्ञानबलात् वदति'' इति वदन् भास्करं प्रशंसितवान् ।

''आर्य ! यावत् अहं भवतः गृहं गन्तुम् उद्युक्तः तावता भवान् एव मम गृहम् आगतः । भवतः आगमनस्य कारणं किम् ?'' इति अपृच्छत् भास्करः ।

तदा मृत्युञ्जयः अवदत् – ''भवान् महा-प्रज्ञावान् अस्ति । अतः एव भवत्समीपम् आगतं मया । मम ग्रामे लक्ष्मणः नाम कश्चन कृषिकः अस्ति । तस्य पुत्रः राजास्थाने कार्यं करोति । लक्ष्मणः पुत्रेण सह राजधान्याम् एव वासं कर्तुम् इच्छति । अतः सः स्वस्य भूमिं विक्रेतुम् इच्छति । एकरम्मितायाः भूमेः मुल्यं सहस्र मुद्राः इति वदति सः । वस्तुतः तु एकरमितायाः तस्य भूमेः मूल्यं शतं मुद्राः भवेयुः । तस्मात् कोऽपि तां भूमिं क्रेतुम् उत्सुकः न जातः । अतः भवान् एव एतां भूमिं क्रीणातु इति लक्ष्मणः मां सानुरोधं वदति'' इति ।

''तावता अधिकेन मूल्येन तस्याः भूमेः

भाति मम । अतः आवाम् एतत् नगरं परित्यज्य राजधानीं गच्छाव । तत्र बहवः धनिकाः वसन्ति । तान् उद्दिश्य भविष्यफलम् उक्तं चेत् अमूल्यानि उपायनानि प्राप्यन्ते । यदि राज्ञः कृपादृष्टिः अपि भवतः उपरि पतेत् तर्हि अल्पे एव काले वयं धनिकाः स्याम'' इति ।

पत्न्याः एतत् वचनं श्रुत्वा भास्करः हसन् अवदत् – ''मया ज्योतिषं सर्वथा न ज्ञायते । तत्र मम विश्वासः अपि नास्ति । भाग्यं मदनुकूलम् आसीत् । अतः मया उक्तं सत्यं जातम् । सर्वदा एवमेव भवेत् इति नास्ति । अतः ज्योतिषस्य अवलम्बनं न इच्छामि अहम् । राजधानीं तु अवश्यं गच्छाम । किन्तु ज्योतिषम् अवलम्ब्य जीवनाय न, अपि तु वाणिज्याय । दैवं यदि अनुकूलं स्यात् तर्हि धनम् अवश्यं प्राप्येत'' इति ।

क्रयणं हानिकरम् एव । सा भूमिः किमर्थं क्रेतव्या भवता ?'' इति अपृच्छत् भास्करः ।

''सा तु काचित् कथा । पूर्वं लक्ष्मणस्य उपरि महान् ऋणभारः आसीत् । तस्मिन् धैर्यं पूरयितुम् अहम् उक्तवान् यत् अचिरात् एव ऋणात् मुक्तिः भविष्यति, आर्थिकस्थितौ प्रगतिः अपि भविष्यति, भवत्पुत्रः राजास्थाने उद्योगं प्राप्स्यति, क्षेत्रे च दशसहस्त्रमुद्रात्मकं गुप्तधनं प्राप्स्यते च इति । मया उक्तं सर्वं तस्य जीवने प्रवृत्तम्, ऋते गुप्तनिधेः । इदानीं तदुक्तेन मूल्येन अहं कथं वा तत् क्षेत्रं क्रेतुं शक्नुयाम् ? एतदवसरे मया किं करणीयम् इति न ज्ञायते । अतः एव भवतः मार्गदर्शनं प्राप्तुम् अहम् अत्र आगतः'' इति अवदत् मृत्युञ्जयः ।



''मया कीदृशं मार्गदर्शनं कर्तुं शक्येत ? अहमस्मि अल्पज्ञः'' इति अवदत् भास्करः ।

''तस्मिन् क्षेत्रे गुप्तनिधिः अस्ति इति मया यत् उक्तं तत् यदि भवता दृढीक्रियेत तर्हि अहं तत् क्षेतं क्रीणीयाम्'' इति अवदत् मृत्युञ्जयः ।

''महोदय ! धनसम्पादनस्य कोऽपि मार्गः यदा मम पुरतः न आसीत् तदा भवता ज्योतिष-द्वारा जीवनमार्गः दर्शितः । यत् भवान् एव सम्यक् न जानाति तत् अहं कथं वा ज्ञातुं शक्नुयाम्'' इति आश्चर्येण अवदत् भास्करः ।

''पुत्र ! भवतः वाणी अपूर्वा । भवत्समीपे ज्ञानं न स्यात्, किन्तु भवत्समीपे भाग्यस्य आनुकूल्यम् अस्ति । भवतः वचने मम महती श्रद्धा । अतः भवान् स्वनिर्णयं श्रावयतु'' इति दैन्येन प्रार्थितवान् मृत्युञ्जयः ।

किमपि उत्तरं वक्तव्यम् एव आसीत् भास्करेण । अतः सः मृत्युञ्जयम् अवदत् - ''भवान् तत् क्षेत्रं क्रीणातु'' इति । 'अस्तु' इति उक्त्वा मृत्युञ्जयः ततः निर्गतवान् ।

यत् प्रवृत्तं तत्सर्वं दृष्टवती सन्ध्या भास्करम् उक्तवती - ''इतः परं भवान् ज्योतिषफल-कथनं परित्यजतु । राजधानीं गत्वा किमपि वाणिज्यं करोतु'' इति ।

तदा भास्करः हसन् अवदत् - ''इदानीं वा ज्योतिषविषये भवत्याः अन्धश्रद्धा अपगता इत्यतः अहं सन्तुष्टोऽस्मि'' इति ।

एतत् श्रुत्वा सन्ध्या अवदत् - ''ज्योतिषस्य विषये मम श्रद्धा अपगता इति न । वाणिज्यात् यदि दशसहस्त्रं मुद्राः सम्पादयितुं शक्याः तर्हि तावत् धनं मृत्युञ्जयाय दत्त्वा तत् क्षेत्रम् अस्माभिः क्रेतुं शक्यम् । तदा क्षेत्रस्थं तत् गुप्तधनम् अस्मदीयं भविष्यति'' इति ।

ततः भास्करः सपत्नीकः राजधानीं गतवान् । अल्पे एव काले वाणिज्येन दशसहस्त्रं मुद्राः सम्पादिताः तेन ।

दशसहस्त्रं मुद्राः स्वीकृत्य तौ ग्रामं प्रति आगतौ । तयोः आगमनं दृष्ट्वा पिता सीतारामः उक्तवान् - ''योग्ये समये आगतम् अस्ति भवता । अद्य मृत्युञ्जयस्य गृहे भोजोत्सवः व्यवस्थापितः अस्ति । तेन स्वक्षेत्रे दशसहस्त्रमुद्रात्मकः धनराशिः प्राप्तः अस्ति । अतः सर्वे तस्य प्रशंसां कुर्वन्तः सन्ति । निधिप्राप्तिं सः पूर्वम् एव ज्योतिषबलात् जानाति स्म । अतः एव एकरपरिमाणिकायै भूम्यै सहस्त्रं मुद्राः दत्त्वा तां भूमिं क्रीत्वा सः दशसहस्त्रं मुद्राः प्राप्तवान्'' इति ।

एतत् श्रुत्वा भास्करः स्तब्धः जातः ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन् ! मृत्युञ्जयः ज्योतिषशास्त्रे सुनिपुणः इत्यत्र नास्ति एव सन्देहः । तथापि भूमिक्रयणविषये सः भास्करस्य अभिप्रायं किमर्थं पृष्टवान् ? किं स्वस्य ज्योतिषज्ञानविषये तस्य विश्वासः न आसीत् ? भास्करः ज्योतिषशास्त्रं न जानाति । तथापि तदीया वाणी किमर्थं सत्या भवति स्म ? भास्करेण किमर्थं वा ज्योतिषशास्त्रम् अवलम्बितम् ? किमर्थं वा परित्यक्तम् ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''महावैद्यः अपि स्वस्य बान्धवानां चिकित्सायै अन्यस्य वैद्यस्य साहाय्यं स्वीकरोति । एवमेव ज्योतिषिकः अपि । स्वसम्बद्धः निर्णयः यदा करणीयः भवति तदा सः अपि अन्यस्य ज्योतिषिकस्य साहाय्यं याचति । मृत्युञ्जयेनापि एतदेव कृतम् । स्वज्ञानविषये अविश्वासः अस्ति इति एतस्य तात्पर्यं न । भास्करः ज्योतिषशास्त्रज्ञः न चेदपि तदीयं वचनं फलितं भवति स्म यत् तत्र भाग्यम् एव कारणम् । भाग्यं यदि अनुकूलं तर्हि सर्वं सेत्स्यति । किन्तु भाग्यम् एव अवलम्ब्य दीर्घकालं यावत् जीवनं न उचितम् । अतः एव भास्करः ज्योतिषिकवृत्तिं परित्यक्तवान् । तत् उचितम् अपि आसीत्'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।






## महाभारतकथा भित्तिचित्ररूपेण

महाराष्ट्रे स्थितानि अजन्ता-एल्लोरा-भित्तिपत्राणि तु जगत्प्रसिद्धानि । दक्षिणभारते अपि एतादृशानि एव भित्तिचित्राणि उपलभ्यन्ते सिन्तानवसल्, तञ्जावूरु, तिरुनन्दिक्केश इत्यादिषु स्थलेषु । एतानि सर्वाणि स्थानानि तमिलनाडुराज्ये सन्ति ।

दौर्भाग्यं नाम तञ्जावूरुस्थे बृहदीश्वरदेवालये स्थितेभ्यः भित्तिचित्रेभ्यः ऋते अन्यस्मिन् स्थलद्वये स्थितानि भित्तिचित्राणि प्रतिसंस्कर्तुम् अपि अयोग्यां दशां प्राप्तवन्ति सन्ति । तञ्जावूरुमन्दिरे अपि द्वितीये अट्टे स्थितानां केषाञ्चन भित्तिचित्राणां सार्वजनिकदर्शनं सुरक्षिततां निमित्तीकृत्य निषिद्धम् आसीत् किञ्चित्कालम् ।

भित्तिचित्रेषु जनानाम् आसक्तेः वर्धनाय दक्षिणभारतीयसांस्कृतिककेन्द्रभूते तञ्जावूरुनगरे २५० चतुरस्रपादमिते प्रदेशे स्थितानि महाभारतकथावलम्बीनि २१ भित्तिचित्राणि इदानीं सार्वजनिक-दर्शनाय अनुमतानि सन्ति । तत्रत्ये प्रथमे चित्रे वेदव्यासः महाभारतं कथयन् दृश्यते, गणपतिश्च लिखन् दृश्यते । अन्तिमं चित्रं तु महाभारतयुद्धे अष्टादशे दिने जातं दुर्योधनस्य अवसानंनिरूपयति । चित्ररचनायै ये वर्णाः उपयुक्ताः ते पर्णैः, पुष्पैः, फलैः, वृक्षत्वग्भिः, शिलाचूर्णैः च निर्मिताः आसन् । केरलीयेन केनचित् परिवारेण एतानि चित्राणि निर्मितानि । एवं हि श्रूयते यत् पिता सामान्यवर्णेन चित्रस्य स्थूलरूपं रचयति स्म, पुत्रः रेखाणां परिष्कारं कृत्वा अन्तिमं रूपं कल्पयति स्म, माता च तानि चित्राणि वर्णैः विभूषयति स्म इति ।



# अपूपे रत्नानि

पूर्वं कश्चन राजा आसीत् । हस्तगतस्य भाग्यस्य उपयोगं जनाः कथं कुर्वन्ति इति ज्ञातुं महत् कुतूहलं तस्य । कदाचित् सः प्रासादपाचकम् अवदत् यत् उत्तमम् अपूपद्वयं सज्जीक्रियताम् इति । पाचकेन अपूपद्वयं सज्जीकृतम् । तत्र एकः सामान्यः इव दृश्यते स्म । अपरः बृहत् स्फीतः च । तस्य अन्तः कानिचन रत्नानि अपि स्थापितानि आसन् ।

कश्चन आस्थानिकः प्रतिसप्ताहं दानं करोति स्म । राजा तम् उक्तवान् – ''आर्य ! यः योग्यः इति भासते तस्मै एतं विशिष्टम् अपूपं ददातु । अन्यम् अपूपं यस्मैयस्मैचित् वा भवान् दातुम् अर्हति'' इति ।

दानदिने प्रातः उभौ आस्थानिकस्य समीपम् आगतवन्तौ । तयोः अन्यतरः दीर्घश्मश्रुकः, विशिष्टं युतकं धृतवान् च आसीत् । दर्शनात् एव भासते स्म यत् एषः कश्चन साधुः इति । अपरः आसीत् सामान्यः याचकः । तस्मै साधवे आस्थानिकः रत्नमयम् अपूपं दत्तवान् । सामान्याय याचकाय अपरम् अपूपं दत्तवान् सः ।



अग्रे किं प्रवर्तेत इति ज्ञातुम् इच्छन् राजा भवनस्य ऊर्ध्वभागे स्थित्वा सर्वं परिशीलयन् आसीत् । रत्नमयम् अपूपं प्राप्तवान् साधुजनः अपूपस्य भारं सकृत् परीक्षितवान् । एषः अपूपः सम्यक् पक्वः न स्यात् इति भावः तस्य मनसि आगतः । अतः सः सामान्यं याचकम् अवदत् – ''मित्र ! एषः अपूपः भारयुक्तः इव दृश्यते । अहं तु इदानीं बुभुक्षितः नास्मि । किं भवान् एतं स्वीकृत्य भवद्धस्तस्थम् अल्पभारोपेतं मह्यं दद्यात् ?'' इति ।

सामान्यः याचकः एतत् अङ्गीकृतवान् । ततः सः स्वस्य हस्ते स्थितं तस्मै साधवे दत्त्वा साधुना दत्तं स्वीकृत्य ततः निर्गतवान् ।

सामान्याय याचकाय भारयुतम् अपूपं दत्तवतः साधोः मुखे मन्दहासः विलसति स्म । 'अर्धपक्वम् अपूपम् एतस्मै यच्छता मया महत् कौशलं प्रदर्शितम्' इति चिन्तयन् सः अपि आनन्देन ततः निर्गतवान् ।

एतत् दृष्ट्वा राजा अचिन्तयत् – 'भगवतः सङ्कल्पः विचित्रः । एतस्य धनिकत्वं न इच्छति

देवः । अतः एव सः रत्नमयम् अपूपम् एतद्धस्तगतं कर्तुं न इष्टवान्' इति ।

अग्रे किं प्रवर्तेत इत्यपि ज्ञातव्यम् इति राजा अचिन्तयत् । अतः सः उभौ गुप्तचरौ आज्ञापितवान् - "भवद्भ्याम् एतौ अनुसरणीयौ । अपूपं नीत्वा किं कुरुतः इति ज्ञात्वा अहं वक्तव्यः" इति ।

गुप्तचरौ सायं प्रत्यागत्य राजानं प्रवृत्तं सर्वं निवेदितवन्तौ । सः साधुः प्रासादात् निर्गत्य कुटीरं गतवान् । तत्र तेन युतकम् अपनीतम् । श्मश्रु अपि अपनीतम् ! ये आहारपदार्थाः सङ्गृहीताः ते तेन खादिताः । अनन्तरं यथापूर्वं श्मश्रु मुखे धृत्वा युतकं च धृत्वा भिक्षायाचनाय सः पुनरपि ततः निर्गतवान् ।



अपरः सामान्यः याचकः स्वस्य कुटीरं गत्वा अपूपं कर्तितवान् । तस्य अन्तः तेन रत्नानि प्राप्तानि । तानि दृष्ट्वा तस्य पत्नी महता सन्तोषेण अवदत् - "एतेन अहं सुवर्णहारं कारयिष्यामि" इति ।

तदा सः याचकः पत्नीम् अवदत् - "पुण्यात्मा आस्थानिकः एतत् कस्मैचित् साधवे दत्तवान् । सः मह्यं दत्तवान् । एतत् मम निष्कपटतायाः परीक्षार्थम् एव मया प्राप्तम् अस्ति । यः दत्तवान् सः आस्थानिकः प्रमादवशात् एतत् न दत्तवान् खलु इति आदौ मया ज्ञातव्यम् । कदाचित् चोरः तस्य गृहात् रत्नानि चोरयित्वा अपूपे गोपितवान् स्यात् अपि । चोरः तत् स्वगृहं नेतुं प्रायः योजनां कृतवान् स्यात्, तदेव कथमपि मया प्राप्तं स्यात् अपि । अथवा आस्थानिकः जानन् एव साधवे एतत् दत्तवान् स्यात् । तदा तु एतत् तेन साधुना एव प्राप्तव्यम् । अथवा, एतत् मदीयम् एव स्यात् चेदपि एतस्य भागशः उपयोगे एव मम अधिकारः । अर्हेभ्यः प्रतिवेशिभ्यः अपि एतस्य कश्चन भागः मया दातव्यः" इति ।

ततः अचिरात् एव सः सामान्यः याचकः आस्थानिकसमीपम् आगतः । राजा तं स्वसमीपम् आनाय्य - 'एतानि रत्नानि भवान् एव स्वीकरोतु' इति उक्त्वा तस्य निष्कपटतानिमित्तं पारितोषिकम् अपि दत्तवान् सः ।

"यः साधुः इव व्यवहृतवान् सः दुष्टः यथायोग्यं दण्डयिष्यते मया । मया तु अद्य उत्तमः पाठः पठितः । यदि प्रथमचिन्तनमात्रे मया विश्वसितं स्यात् तर्हि मया सत्यम् अवगतं न अभविष्यत् एव" इति आस्थानिकान् उद्दिश्य अवदत् राजा ।

# मूकजीविनः साक्ष्यम्

सुधामपुरे भीमः नाम कश्चन कृषिकः वसति स्म । सः स्वस्य क्षेत्रे कूष्माण्डलताः आरोपितवान् आसीत् । कूष्माण्डाः यदा प्रवर्धन्ते तदा तान् कुशलपुरं नीत्वा विक्रीणीते स्म सः । कदाचित् सः क्षेत्ररक्षकं कलेशम् अवदत् – ''अद्य अहं मम बन्धोः दर्शनाय नगरान्तरं गच्छन् अस्मि । मासानन्तरम् एव प्रत्यागमनं भवेत् । अतः क्षेत्ररक्षणं जागरूकतया करोतु'' इति ।

भीमस्य निर्गमनानन्तरं कलेशः तदा तदा दशद्वादश कूष्माण्डान् स्वस्य वृषभशकटे आरोप्य पुत्रस्य द्वारा नगरे विक्रयणं कारयति स्म ।

मासानन्तरं भीमः प्रत्यागतः । क्षेत्रदर्शनात् एव तेन अवगतं यत् क्षेत्रे कूष्माण्डफलेषु न्यूनता दृश्यते इति । कलेशेन एव एतत् चौर्यं कृतम् इति निर्णीतं तेन । चौर्यस्य अभिज्ञानाय तेन कश्चन उपायः चिन्तितः ।

अनन्तरदिने सः कलेशम् अवदत् – ''श्वः प्रातः एव भवान् भवदीयं वृषभशकटं मम गृहं प्रति प्रेषयतु । कूष्माण्डाः नगरं प्रति प्रेषणीयाः सन्ति'' इति । अनन्तरदिने कलेशः शकटम् आनीतवान् । पञ्चविंशतिं कूष्माण्डान् शकटे आरोप्य भीमः कलेशम् अवदत् – ''मम आरोग्यं सम्यक् नास्ति । मार्गः अपि असमीचीनः । अतः शकटः मन्दगत्या गच्छतु'' इति । कलेशः एतत् अङ्गीकृत्य मन्दगत्या शकटम् अचालयत् । नगरे कस्यचित् आपणस्य पुरतः शकटः स्थगितः । आपणिकः कलेशम् अवदत् – ''पूर्वं भवता दशद्वादश एव कूष्माण्डाः आनीयन्ते स्म । अद्य कथम् अधिकतया आनीताः ?'' इति ।

एतस्मात् कलेशस्य चौर्यम् अभिज्ञातम् अवदत् । भीमः तम् अवदत् – ''सर्वदा यत्र गम्यते तत् स्थलं प्रति एव शकटं नयतः वृषभौ । मूकजीविनां साक्ष्यं कदापि अवितथं न भवति । चोरः भवान् इदानीम् एव उद्योगात् निष्कासितः अस्ति मया'' इति ।





# भगवतः अस्तित्वम्

नामदेवस्य गुरुकुले यावन्तः छात्राः पठन्ति तेषु चैतन्यः एव महाबुद्धिमान् । सर्वेषु विषयेषु गभीरं ज्ञानं सम्पादितवान् आसीत् सः । तस्य बुद्धिमत्तां दृष्ट्वा नामदेवः नितरां सन्तुष्टः आसीत् । स्वस्य समग्रं ज्ञानं शिष्यं बोधितवान् सः ।

चैतन्यः अष्टादशवर्षीयः जातः । तावता गुरुकुले यद्यत् अध्येतव्यं तत्सर्वम् अधीतवान् आसीत् सः । अतः कदाचित् गुरुः नामदेवः तम् अवदत् – ''वत्स ! भवतः अध्ययनं समाप्तम् अस्ति । भवान् विनयशीलः विद्यासम्पन्नः च जातः अस्ति । अतः भवान् गृहं प्रतिगत्य मातापित्रोः सेवां कर्तुम् अर्हति । भगवान् सुखशान्त्यादिभिः भवन्तम् अनुगृह्णातु'' इति ।

चैतन्यः विनयेन आचार्यं प्रणम्य अवदत् – ''गुरुवर्य ! भवता सर्वाः विद्याः बोधिताः । किन्तु भवान् स्वस्य कथनस्य अन्ते यं भगवन्तम् उल्लिखितवान् सः तु मया न दृष्टः । यः भगवान् मया क्वापि न दृश्यते सः मां कथं वा अनुग्रहीतुम् अर्हेत् ?'' इति ।

चैतन्यः प्रत्यक्षप्रमाणवादी आसीत् । यत् प्रत्यक्षप्रमाणेन न निरूपितं भवति तत्र न विश्वसिति स्म सः ।

शिष्यस्य कथनं श्रुत्वा नामदेवः क्षणकालं विचिन्त्य अवदत् – ''चैतन्य ! भवतः प्रश्नस्य उत्तरं कालान्तरे दास्यते मया । इदानीम् एकं कार्यं करणीयं भवता । उत्तरस्यां दिशि स्थितम् अरण्यं अतिक्रान्तं चेत् सुशान्तनामकं नगरं प्राप्यते । ततः क्रोशमिते दूरे भवानीपुरं नाम ग्रामः अस्ति । तत्र मम भ्राता निवसति । किं भवान् तत्र गत्वा कुशलवार्तां ज्ञात्वा आगन्तुं शक्नुयात् ?'' इति ।

''अस्तु'' इति उक्त्वा चैतन्यः अनन्तरदिने एव भवानीपुरं प्रति प्रस्थितवान् । दिनद्वयस्य प्रयाणाय अपेक्षितं पाथेयं सज्जीकृत्य तस्मै दत्तवती गुरुपत्नी ।

ततः प्रस्थितः चैतन्यः वेगेन पदानि



स्थापयन् मध्याह्नाभ्यन्तरे अरण्यं प्रविष्टवान् । तावता पिपासा प्राप्ता तेन । अतः सः जलस्य अन्वेषणाय उद्युक्तः । तावता तेन कश्चन अन्धः वृद्धः दृष्टः, यश्च वृक्षगुल्मलतादीनां पर्णानि हस्तेन स्पृशन्, गन्धं च जिघ्रन् तानि सङ्गृह्णन् आसीत् ।

चैतन्यः तस्य समीपं गत्वा अपृच्छत् - ''आर्य ! किम् अत्र अन्विष्यते भवता ?'' इति ।

तदा सः वृद्धः अवदत् - ''न किमपि अन्विष्यते । यदि किमपि नष्टं चेदेव खलु अन्वेषणस्य प्रसक्तिः ? अहं समीपे एव स्थिते वनजनवसतौ वसामि । जनाः माम् 'औषधतातः' इति निर्दिशन्ति । औषधीयसस्यानि स्पर्शेन अभिज्ञाय घ्राणेन परीक्ष्य पर्णानि सङ्गृह्णामि । अहं तु जन्मना अन्धः अस्मि'' इति ।

''इदानीं यत् पर्णं भवतः हस्ते अस्ति तत् कस्य रोगस्य निवारणाय भवेत् ?'' इति अपृच्छत् चैतन्यः ।

''विषहरम् एतत् । सर्पदंशनावसरे एतस्य विशेषोपयोगः भवितुम् अर्हति । यः सर्पेण दष्टः भवति तस्य मुखे एतस्य रसः स्थापितः चेत् क्षणाभ्यन्तरे विषप्रभावः अपगच्छति । यदि इच्छा तर्हि भवान् एतत् स्वसमीपे स्थापयतु । भवान् अरण्ये अटति । अतः कदाचित् एतस्य आवश्यकता भवेत् अपि'' इति अवदत् सः अन्धः वृद्धः ।

चैतन्यः तां लतां वस्त्रस्य अन्तः स्थापयित्वा अपृच्छत् - ''किं समीपे कुत्रापि जलं प्राप्येत ?'' इति ।

''समीपे एव कश्चन कूपः अस्ति । अन्वेषणात् सः प्राप्यते'' इति अवदत् सः अन्धः वृद्धः ।

चैतन्यः इतस्ततः अटन् कूपस्य अन्वेषणम् अकरोत् । ततः अनतिदूरे वटवृक्षस्य पार्श्वे तेन कश्चन कूपः दृष्टः । सः जलं पीत्वा भोजनं समाप्य वृक्षस्य अधः शयनं कृतवान् । शरीरस्य उपरि कस्यचित् वस्तुनः पतनात् सः जागरितः जातः । कश्चन शशः धावन् दृष्टः तेन । तावता वृक्षस्य काचित् शाखा सशब्दं पतिता । दैववशात् ततः अपसर्तुं शक्तः चैतन्यः व्रणितः न जातः । यदि शशः तदुपरि गतवान् न स्यात्, यदि च तेन जागरणं प्राप्तं न स्यात् तर्हि प्रायः तदुपरि शाखा पतिता एव स्यात्, प्राणापायश्च अभविष्यत् ।

चैतन्यः ततः अग्रे प्रस्थितवान् । अरण्यम्

अतिक्रम्य तेन कश्चन ग्रामः प्राप्तः । तत्र कश्चन दरिद्रः तेन दृष्टः । तेन निर्धनेन सह तदीया पत्नी, पुत्रः च आस्ताम् । ते नितरां बुभुक्षिताः आसन् । आहारार्थं ते भिक्षां याचन्ते स्म ।

चैतन्यः आत्मनः समीपे स्थितम् आहारं तेभ्यः दत्त्वा अग्रे गतवान् । यावत् तेन नगरं प्राप्तं तावता अन्धकारः प्रसृतः आसीत् । अतः तेन धर्मशालायां वासः कृतः । मध्यरात्रे कञ्चित् कोलाहलं श्रुत्वा सः उत्थितवान् । धर्मशालावासी कश्चित् फेनम् उद्वमन् उत्तपन् आसीत् । कश्चन घोरः सर्पः ततः निर्गच्छन् अपि दृष्टः ।

चैतन्यः झटिति अवगतवान् यत् सः विषसर्पः एव धर्मशालावासिनम् अदशत् इति । सः झटिति स्वसमीपे स्थितां लतां निष्पीड्य ततः रसं निष्पाद्य तं रसं सर्पदंशं प्राप्तवतः मुखे स्थापितवान् । तस्मात् तदीयस्य शरीरस्य नीलवर्णता अपगता । शरीरं सहजं वर्णं प्राप्नोत् ।

सः सर्पदंशं प्राप्तवान् जनः न अन्यः, अपि तु तस्य देशस्य महामन्त्री एव । जनानां स्थितेः अवगमनाय वेषान्तरधारी सन् सः देशे सर्वत्र अटति स्म । तदवसरे एव एषा घटना घटिता।

महामन्त्री चैतन्यस्य प्रशंसां बहुधा कुर्वन् अवदत् - ''भवता मम प्राणाः रक्षिताः । भवतः ऋणात् मुक्तिः तु सुदुर्लभा । तथापि अल्पः उपकारः कर्तुं शक्यः मया । राजास्थाने उद्योगं दापयितुं शक्नोमि अहम् । किम् एतत् इष्यते भवता ?'' इति ।

चैतन्यः मन्त्रिणे कृतज्ञतां समर्प्य - ''अहं कस्यचित् विशेषकार्यस्य निमित्तं प्रस्थितः अस्मि । अतः इदानीं किमपि वक्तुं न अर्हामि । कालान्तरे भवन्तं दृष्ट्वा मम अभिप्रायं



वक्ष्यामि'' इति उक्त्वा सुशान्तनगरात् निर्गत्य भवानीपुरं प्रति गत्वा गुरुवर्यस्य अनुजस्य कुशलवार्तां प्राप्य ततः प्रतिगतवान् ।

सूर्यास्तसमये तेन गुरुकुलं प्रत्यागतम् । गुरुं प्रवृत्तं सर्वम् उक्तवान् सः । सर्वं श्रुत्वा गुरुः हसन् अवदत् - ''वत्स ! चैतन्य ! भवान् भगवतः अस्तित्वस्य विषये मां पृष्टवान् आसीत् खलु ? मम हस्तक्षेपं विनैव भवता स्वयं भगवान् दृष्टः अस्ति'' इति ।

''भगवान् कुत्र दृष्टः मया ? सः कुत्रापि न दृष्टः एव खलु मया !'' इति साश्चर्यम् अवदत् चैतन्यः ।

तदा नामदेवः हसन् अवदत् - ''भगवान् अत्र तत्र सर्वत्र सर्वदा दृश्यते । नामरूपातीतः सः अपि असङ्ख्यैः रूपैः दृश्यते । तस्य सर्वव्यापिनः अभिज्ञानाय विज्ञता आवश्यकी'' इति ।

गुरोः वचनस्य आशयः न गृहीतः चैतन्येन । अतः सः आश्चर्येण गुरोः मुखम् अपश्यत् ।

तदा नामदेवः पुनः अवदत् - ''वत्स ! यः अन्धः वृद्धः भवते विषहारिणीं लतां दत्तवान् सः भगवान् एव । अरण्ये अपि कूपस्य निर्माणं यः कारितवान् सोऽपि भगवान् एव । यः शशः भवतः प्राणानां रक्षणे साहाय्यम् अकरोत् सोऽपि दैवांशसम्भूतः एव । सर्पदंशनात् अपायस्थितिं गतवतः मन्त्रिणः रक्षणं कृतवान् भवान् । अतः भवति अपि भगवदंशः अस्ति । एवं भगवान् नानाकारः । सः कदा केन रूपेण कस्य पुरतः प्रत्यक्षः भवति इति केनापि वक्तुं न शक्यते । भवतः पुरतः अपि सः भगवान् विविधैः रूपैः प्रत्यक्षः जातः । तत् सर्वं दृष्ट्वा अपि भवान् मां पृच्छति खलु - मया भगवान् कुत्र दृष्टः इति । नितराम् आश्चर्यकरम् एतत्'' इति ।

गुरोः वचनं श्रुतवति चैतन्ये ज्ञानम् उदितम् । 'यस्मिन् दयाकरुणादयः भवन्ति तस्य हृदये भगवान् निवसति' इति अवगच्छन् सः गुरुं नमस्कृतवान् ।

एतदनन्तरं गुरोः अनुज्ञां प्राप्य गृहं गतः सः मातापितृभ्यां सह सुशान्तनगरं गत्वा मन्त्रिणा मिलितवान् । मन्त्रिणः साहाय्येन तेन राजास्थाने उत्तमः उद्योगः प्राप्तः ।



# वार्ताविशेषः



## गान्धिवर्यस्य परिगणनं विश्वनायकत्वेन

महात्मा गान्धिः मदर्‌थेरेसा च 'ब्रिटिश् रेड्क्रास् सोसैटी'नामिकया संस्थया कृते गतेषु षष्ट्यां वर्षेषु जातानां विश्वनायकानां चयनरूपे सर्वेक्षणे स्थानं प्राप्तवन्तौ स्तः । एतस्मिन् सर्वेक्षणे २००० ब्रिटिश्‌जनाः भागम् ऊढवन्तः आसन् । दक्षिणाफ्रिकीयः नायकः नेल्सन् मण्डेलः प्रथमत्वेन चितः तैः ।

दिवं गता राज्ञी डयाना द्वितीयं स्थानम् आप्तवती । गायकः बाब्‌गल् डफ् तृतीयं स्थानम् अवाप्नोत् । गान्धिवर्यः, थेरेसा च चतुर्थं पञ्चमं च स्थानं प्राप्तवन्तौ ।

## एतस्य पठनं न लीलाविषयः

अमेरिकादेशे सियाटल्‌नगरे भूतानदेशीयं १३० टन्‌भारयुतं विशालभोजनपीठाकारकं पुस्तकं १०,००० अमेरिकन्‌डालरैः विक्रीतं जातम् । गिन्नीस्-पुस्तकं वदति यत् जगति स्थितम् अतिबृहत् पुस्तकम् एतत् एव इति । भूताननगरे शैक्षणिककार्याणां विकासाय एतस्य विक्रयणं कृतम् । तस्य पुस्तकस्य नाम अस्ति - '*ए विषुवल् ओडेस्सी एक्रोस् दि लास्ट् हिमालयन् किङ्ग्डम्*' इति । अत्र यानि भावचित्राणि सन्ति तानि प्रायः विरललभ्यानि ।



# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५०/- पारितोषिकत्वेन

**अधस्तनकथा पठ्यताम् -**

शङ्करः अर्जुनसिंहस्य प्रासादे प्रमुखपाचकः । कदाचित् राज्ञी वार्तां प्रेषितवती - ''अद्य मम भ्राता आगतः अस्ति । सः राज्ञा सह भुङ्क्ते'' इति ।

''अहं राजमात्राय पाकं करोमि, न अन्यस्मै'' इति अवदत् शङ्करः । राज्ञी एतम् अंशं राजानं न्यवेदयत् । राजा शङ्करम् अपृच्छत् - ''किं भवता एवम् उक्तम् ?''

''आं महाराज । मया तथा उक्तम् इति तु सत्यम् । मया भवदर्थम् एव पाकः क्रियते, न अन्यस्य निमित्तम्'' इति अवदत् शङ्करः ।

''एवम् ! अहं यदि शतं रजतनाणकानि अधिकतया दद्यां तर्हि किं भवान् मम श्यालाय अपि पाकं कुर्यात् ?'' इति अपृच्छत् राजा ।

सः प्रधानपाचकः शङ्करः एतस्य किम् उत्तरं दत्तवान् स्यात् इति वदन्तु, अधोनिर्दिष्टान् अंशान् मनसि स्थापयन्तः ।

- किं सः पाचकः अधिकवेतनप्राप्त्युद्देशेन तथा उक्तवान् ?
- किं सः पाचकः स्वस्य कथनस्य परिवर्तनं न अङ्गीकृतवान् ?
- अन्येषां निमित्तम् अपि पाकः करणीयः इति किं राज्ञा आदेशः कृतः ?

**स्वस्य अभिप्रायं १००-१५० शब्दैः लिखित्वा पिहितपत्रस्य उपरि 'Story contest' इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् -**

**अन्तिमः दिनाङ्कः ३१, अक्टोबर् - २००४**

नाम ------------------------ वयः --------- जन्मदिनाङ्कः -----------

विद्यालयः ------------------------------------ कक्ष्या ----------

गृहसङ्केतः ----------------------------------------------

----------------------------------------------------------

------------------------------ Pincode ---------------

पोषकस्य हस्ताक्षरम्                    भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097



# दयालुता

पुष्पपुरनामके ग्रामे पुरुषोत्तमो नाम कश्चन वणिक् निवसति स्म । तस्य पुत्रस्य नाम मुरारिः इति । मुरारिः परमदयालुः । सः तरुणः जातः अस्ति इदानीम् ।

कदाचित् सः क्रीडितुं गतः । तदवसरे तस्य मित्रस्य युतकं छिन्नं जातम् । तत् मित्रं निर्धनम् आसीत् । 'मम एकमात्रं युतकम् अपि छिन्नम् इत्यतः कथम् अहं गृहं गच्छानि ?' इति वदता उच्चैः रोदनं कृतं तेन । अतः दयालुः मुरारिः स्वस्य युतकम् अपनीय तस्मै दत्त्वा विना युतकम् एव गृहम् आगतवान् ।

एतत् ज्ञातवान् पुरुषोत्तमः पुत्रं सम्यक् तर्जयित्वा अवदत् - ''वणिजि एतादृशः दयागुणः सर्वथा न शोभते । भवता अग्रे वाणिज्यवृत्तिः आश्रीयते एव । अतः स्वस्य स्वभावं परिवर्तनीयं भवता'' इति ।

तदा पुरुषोत्तमस्य पत्नी अवदत् - ''किम् एतादृशेन तर्जनेन ? वणिजि करुणागुणस्य आधिक्यं न शोभते इति तु सत्यम् । किन्तु तर्जनेन स्वभावः न परिवर्तते । तदर्थं योग्यस्य गुरोः समीपम् एतं नयतु । सः एतस्मिन् विवेकं जागरयितुं प्रयासं कुर्यात्'' इति ।

पुरुषोत्तमः पत्न्याः वचनं युक्तम् अमन्यत । अतः सः पुत्रेण सह पण्डितस्य सुशर्मणः गृहं गतवान् । मुरारेः स्वभावविषये सर्वम् उक्त्वा पुरुषोत्तमः अवदत् - ''पञ्चतन्त्रे विष्णुशर्मा राजकुमारेषु यथा विवेकं जागरितवान् तथा भवता अपि मम पुत्रे विवेकः जागरणीयः । तेन वृत्त्यन्तरं तु करणीयं नास्ति । वाणिज्यवृत्तेः अनुसरणेन एव तस्य जीवनं सुखमयं भवितुम् अर्हति । तत्र एतदीयः दयागुणः एव बाधकः अस्ति'' इति ।

तदा सुशर्मा मन्दहासपूर्वकम् अवदत् - ''पुरुषोत्तमवर्य ! दया कश्चन उत्तमः गुणः । सर्वेषु मानवेषु सः भवेत् अपि । किन्तु सा दया स्थाने भवेत्, न तु अस्थाने । अचिरात् एव अहम् एतं विवेकिनं करिष्यामि । भवान्

भामहः



चिन्तां मा करोतु'' इति ।

तस्मात् दिनात् मुरारिः प्रतिदिनं सुशर्मणः गृहम् आगत्य विद्याभ्यासम् आरब्धवान् । कदाचित् सुशर्मा मुरारिम् उक्तवान् - ''वत्स ! महत्या श्रद्धया भवान् विद्याभ्यासं यत् करोति तेन अहं सन्तुष्टोऽस्मि । भवान् सुकोमल-हृदयः । दयाकरुणादयः भवति आधिक्येन सन्ति । यस्मिन् दया प्रदर्शयितुम् इष्यते तस्य पात्रता आदौ परीक्षणीया । भाविनि काले भवान् पितुः वाणिज्यम् अनुवर्तयिष्यति । वाणिज्ये कौशलवाक्चातुर्यादयः एव प्रमुखाः भवन्ति । दया न वाणिज्यवर्धिका । अतः वाणिज्यस्य हानिः यथा न स्यात् तथा दया दर्शनीया भवता । अन्यथा भवान् जीवने कष्टम् अनुभवेत्'' इति ।

तदा मुरारिः अवदत् - ''गुरुवर्य ! वाणिज्यं मम कुलवृत्तिः । दया मम जन्मजातः गुणः । एतयोः उभयोः अपि सामञ्जस्यं जीवने कथं कल्पनीयम् इति सर्वथा न अवगतं मया'' इति ।

''स्वानुभवः एव तत् ज्ञापयति । तदस्तु, एषु दिनेषु वरदाचार्यः मह्यम् औषधं ददाति । भवान् तस्य गृहं गत्वा औषधम् आनयतु । कुतः आगतम् इति उक्तं चेत् सः औषधं ददाति'' इति ।

मुरारिः वरदाचार्यस्य गृहं गत्वा आगमन-कारणम् उक्तवान् । तदा वैद्यः अवदत् - ''औषधसज्जीकरणाय घण्टात्मकः कालः आवश्यकः भवेत् । सर्वेषां रोगिणां निर्गमनस्य अनन्तरम् अहं भवते औषधं ददामि'' इति ।

चिकित्सार्थम् आगतान् रोगिणः उद्दिश्य वरदाचार्यः अवदत् - ''कश्चन पङ्गुः मूल-लतादिसङ्ग्रहणे मम साहाय्यं करोति । तस्य पिता नितराम् अस्वस्थः अस्ति । तस्य चिकित्सार्थं सुवर्णरेणुमिश्रितम् औषधं सज्जी-करणीयम् । महान् व्ययः भवति तस्य । यावत् मया दातुं शक्येत तावत् अहं ददामि । दयालवः भवन्तः अपि यथाशक्ति धनं दातुम् अर्हन्ति । सः पङ्गुः बहिः स्थितः अस्ति'' इति ।

एतत् श्रुतवतः मुरारेः हृदयं नितरां दयापूर्णं जातम् । सः बहिः गत्वा अपश्यत् । तत्र कश्चन सुदृढः पुरुषः दण्डसाहाय्येन स्थितः आसीत् ।

सर्वेषां रोगिणां निर्गमनस्य अनन्तरं मुरारिः वरदाचार्यस्य समीपं गत्वा अवदत् - ''मम पिता गुरुश्च वदतः यत् दया न उचिता इति ।

किन्तु मम तु भाति यत् तयोः कथनं न युक्तम् इति । एतस्मै पङ्कवे दातुं मम समीपे धनं नास्ति । अतः अहं मम अङ्गुलौ स्थितं सुवर्णाङ्गुलीयकम् एव दास्यामि । तस्यैव उपयोगेन औषधं निर्मातु भवान्'' इति ।

तदा वरदाचार्यः उच्चैः हसन् बहिः दृष्टिं प्रसार्य 'वीरभद्र !' इति आह्वयत् ।

एतत् श्रुत्वा बहिः स्थितः जनः दण्डं क्षिप्त्वा वेगेन अन्तः आगच्छत् । एतत् दृष्ट्वा मुरारिः नितराम् आश्चर्यान्वितः जातः ।

तदा वरदाचार्यः तस्य स्कन्धे हस्तं स्थापयन् अवदत् – ''मया एव एषा व्यवस्था कारिता आसीत् । इदानीं भवता ज्ञातं स्यात् यत् दयागुणस्य दुरुपयोगः कथं स्वीकरिष्यते लोके इति । एतत् अङ्गुलीयकं पित्रा प्रीतिपूर्वकं दत्तम् आसीत् । तदेव भवान् अन्यस्मै अपात्राय दातुम् उद्यतः आसीत्'' इति ।

अङ्गीकारपूर्वकं शिरः इतस्ततः चालितवान् मुरारिः । तदा वरदाचार्यः पुनः अवदत् – ''औषधदानं मम वृत्तिधर्मः । एतत् अहं सम्यक् पालयामि । किन्तु कदाचित् असत्य-मिश्रितः व्यवहारः अपि मया करणीयः भवति । भवतः गुरोः मातुः चिकित्सा एव अत्र उदाहरणम् । सा तु वृद्धा । वार्धक्य-कारणतः शरीरदौर्बल्यं सहजम् । तत् शरीर-दौर्बल्यं सा अस्वास्थ्यं मन्यते । अतः शक्तिवर्धकम् औषधं दत्त्वा अहं वदामि यत् एतत् अपूर्वम् औषधम्, एतस्य सेवनात् सर्वं सम्यक् भविष्यति इति । एतस्य श्रवणात् सा सन्तुष्टा भविष्यति । वाणिज्यम् अपि एतादृशम् एव । तस्यापि कानिचन रहस्यानि भवन्ति । तानि ज्ञातव्यानि भवता । कः दयार्हः, कश्च कपटः इति ज्ञात्वा एव भवता दया प्रदर्शनीया'' इति ।

मुरारिः औषधम् आनीय गुरवे दत्त्वा अवदत् – ''गुरुवर्य ! दयागुणस्य उपयोगः विना चिन्तनं न करणीयः इति इदानीं ज्ञातम् अस्ति मया । सत्पात्रे एव दया शोभते । के वञ्चकाः, के च दयार्हाः इति विवेकः जीवने अवश्यं स्यात्'' इति ।

मुरारौ जातं परिवर्तनं दृष्टवतः सुशर्मणः महान् सन्तोषः जातः । 'मम प्रयासः सफलः जातः । वणिक् पुरुषोत्तमः निश्चयेन अस्ति भाग्यवान्' इति अचिन्तयत् सः ।



# महाराष्ट्रीया जानपदकथा

## शनिवासरे अवकृपा अनुग्रहश्च

पूर्वं कश्चन निर्धनः कृषिकः आसीत् । तस्य त्रयः पुत्राः । तान् महत्या प्रीत्या पोषितवान् सः । पुत्राः अपि पितरि विशेषतः स्निह्यन्ति स्म । ते कृषिकार्ये पितुः साहाय्यं कुर्वन्ति स्म । यदा ते प्राप्तवयस्काः जाताः तदा कृषिकः तेषां विवाहं निर्वर्तितवान् । स्नुषाणाम् आगमनस्य अनन्तरं निश्चितं यत् प्रतिदिनम् एका स्नुषा गृहे तिष्ठन्ती गृहकार्यादीनि निर्वहन्ती पाकं कुर्यात्, अन्ये उभे कृषिक्षेत्रं गच्छेताम् इति ।

कस्मिंश्चित् शनिवासरे कनिष्ठा स्नुषा गृहे आसीत् । यदा पाककार्यम् आरब्धं तदा कश्चन ध्वनिः तया श्रुतः । सा द्वारम् उद्घाट्य दृष्टवती । द्वारे अल्पवस्त्रः कश्चन याचकः स्थितः आसीत् । सः अवदत् - ''समग्रे शरीरे कण्डूयनं मम । अतः किं भवती मह्यं किञ्चित् तैलं दद्यात्, येन अहं सतैलस्नानं कुर्याम् ?'' इति ।



स्नुषा अन्तः गत्वा किञ्चित् तैलम् आनीय तस्य हस्ते स्थापितवती । याचकः तेन तैलेन शरीरं लिप्तवान् । ''गृहपार्श्वे एव कश्चन कासारः अस्ति । भवान् स्नात्वा आगच्छतु । अहं भोजनं ददामि'' इति अवदत् स्नुषा ।

याचकः स्नानार्थं ततः गतवान् । प्रत्यागमनसमये तेन विशालैः पर्णैः एकं भोजनपात्रं निर्माय आनीतम् । स्नुषा तत्र अन्नादिकं परिवेषितवती ।

''मया इतः पूर्वम् एतादृशं स्वादु भोजनं न कृतम् आसीत्'' इति वदन् सः स्नुषायाः पाकस्य प्रशंसां कृतवान् । भोजनपात्रं च अक्षिप्त्वा छदेः आधारदण्डानां मध्ये स्थापितवान् । स्नुषा एतत् लक्षितवती । किन्तु तद्विषये अधिकम् अवधानम् अदत्त्वा पाके निरता अभवत् सा ।

सायं गृहसदस्याः सर्वे भोजनार्थम् उपविष्टवन्तः । पाकः नितरां स्वादुः आसीत् । सर्वे



कनिष्ठस्नुषायाः प्रशंसां कृतवन्तः । कनिष्ठा स्नुषा यद्यपि भिक्षुकस्य आगमनं स्मृतवती, तथापि किमपि न उक्तवती ।

अनन्तरशनिवासरे द्वितीयस्नुषायाः पाककार्यम् आसीत् । यावत् पाककार्यम् आरब्धं तावता तया अपि द्वारे कोऽपि शब्दः श्रुतः । सः एव याचकः उपस्थितः आसीत् । यदा सा द्वारम् उद्घाट्य आगता तदा सः याचकः अवदत् - ''वत्से ! मम शरीरं क्षतग्रस्तं जातम् अस्ति । अहं सतैलस्नानं कर्तुम् इच्छामि । अतः कृपया किञ्चित् तैलं ददातु'' इति ।

स्नुषया भिक्षुकस्य शरीरे व्रणाः दृष्टाः । सा तं चोरम् अमन्यत । अतः सा तम् उद्दिश्य क्रोधेन - ''भिक्षुकाणां कृते किं तैलं दीयेत ? तादृशं नास्ति अत्र । इतः निर्गच्छ'' इति उक्त्वा सा अन्तः गतवती ।

याचकः पुनरपि उच्चस्वरेण अयाचत् - ''अहं नितरां बुभुक्षितः अस्मि । आ प्रातः किमपि न खादितं मया । कृपया एका रोटिका दीयताम्'' इति ।

तदा स्नुषा गृहस्य अन्तः एव स्थित्वा - ''किं भवान् इतोऽपि न निर्गतः ?'' इति वदन्ती वातायनद्वारा मलिनं जलं तदुपरि क्षिप्तवती ।

''गृहम् आगतस्य याचकस्य विषये किम् एवं व्यवह्रियते ? धिक् भवतीम् । अद्य भवती भोजनं न प्राप्स्यति'' इति उक्त्वा ततः निर्गत-वान् सः याचकः ।

ततः स्नुषा पाककार्ये मग्ना जाता । सायं सर्वे गृहं प्रत्यागताः । ते भोजनाय उपविष्ट-वन्तः । स्नुषा परिवेषणाय पात्राणाम् आवरणम् उन्नीतवती । अहो, आश्चर्यम् ! सर्वाणि पात्राणि रिक्तानि ! केनचित् स्वीकृत्य सर्वं यदि खाद्येत तर्हि यथा दृश्येत तथा दृश्यते स्म सर्वम् अपि ।

कृषिकः स्नुषां निन्दितुम् अनिच्छन् अन्यां स्नुषाम् अवदत् यत् भवती पाके साहाय्यं करोतु, पुनः पाकः क्रियताम् इति । अपरा स्नुषा गोधूमपिष्टपात्रम् उद्घाटितवती । तत्र अल्पम् अपि पिष्टं न दृष्टम् । शाककण्डोले अपि एकोऽपि शाकः न दृष्टः । तैलपात्रं सर्वथा रिक्तं दृष्टम् ।

नितरां खिन्नः कृषिकः द्वितीयेन पुत्रेण सह विपणिं गत्वा गोधूमपिष्टं, शाकान्, तैलं च क्रीत्वा आनीतवान् । सर्वाभिःसम्भूय पाकः कृतः । महता विलम्बेन सर्वैः भुक्तम् ।

अनन्तरशनिवासरे ज्येष्ठा स्नुषा गृहे स्थितवती । यदा पाकः आरब्धः तदा तया अपि याचनध्वनिः श्रुतः । सा बहिः आगता । सः एव याचकः उपस्थितः आसीत् । सः ताम् अपि तैलम् अयाचत् ।

पाककार्ये विघ्नः जातः इत्यतः ज्येष्ठा स्नुषा



नितरां कुपिता । 'गते शनिवासरे आगत्य एषः एव सर्वं चोरितवान् स्यात्' इति भावः तस्याः मनसि आगतः । अतः सा – ''अये दुष्ट ! गते सप्ताहे भवान् एव खलु पिष्टं, शाकान्, तैलं च अस्मद्गृहतः चोरितवान् ? पुनरपि किं चौर्याय आगतम् ? निर्गच्छतु इतः'' इति तं तर्जितवती ।

तदा सः याचकः- ''अहं न चोरः । मया किमपि चौर्यं न कृतम् । स्नानाय किञ्चित् तैलं, खादनाय काश्चन रोटिकाः च दीयन्ताम् । भवत्याः सुखं भवतु इति आशीर्वादं करोमि'' इति अवदत् ।

''किं भवतः आशीर्वादेन ? भवतः आशीर्वादः अपि मास्तु, अनुग्रहः अपि मास्तु । तूष्णीं निर्गच्छतु भवान्'' इति कठोरस्वरेण उक्त्वा अन्तः गत्वा एकां ताडनशलाकाम् आनीय – ''किं मया भवान् इतः बलात् प्रेषणीयः ?'' इति क्रोधेन अपृच्छत् ।

''मम प्रार्थना किं भवत्या तिरस्क्रियते ? येषां निमित्तं भवती पचति ते भवत्या कृतं पाकं न प्राप्स्यन्ति अद्य'' इति उक्त्वा ततः निर्गतवान् सः याचकः ।

''एषः कश्चन उन्मत्तः मूर्खः'' इति स्वगतं वदन्ती सा स्नुषा पाकशालां गत्वा पाकम् आरब्धवती ।

सायं सर्वे आगत्य भोजनार्थम् उपविष्टवन्तः । ज्येष्ठा स्नुषा एकैकशः पात्राणाम् आवरणम् अपनीतवती । एकस्मिन् पात्रे असंख्याः कीटाः दृष्टाः । अपरस्मिन् स्थितः पाकः दुर्गन्धमयः जातः आसीत् । अन्यस्मिन् पात्रे अन्यविधाः कीटाः दृष्टाः । एतत् दृष्ट्वा नितरां दिग्भ्रान्ता ज्येष्ठा स्नुषा भूमौ उपविश्य उच्चैः रोदनं कृतवती ।

प्रवृत्तं सर्वं दृष्ट्वा कृषिकः नितराम् आश्चर्यचकितः । ''प्रायः देवाः अस्माकं विषये क्रुद्धाः इति भाति । अतः एव गते शनिवासरे, अद्य च विलक्षणा घटना अस्मद्गृहे घटिता । देवानां सन्तोषाय अस्माभिः किमपि करणीयम् एव इति भाति'' इति ।

ततः सः कृषिकः ज्येष्ठेन पुत्रेण सह विपणिं गत्वा पाकवस्तूनि, शाकान्, तैलं च क्रीत्वा आनीतवान् । अनन्तरं तिस्रः अपि स्नुषाः सम्भूय पाकं कृतवत्यः ।

अनन्तरशनिवासरे पुनरपि कनिष्ठा स्नुषा पाककार्यार्थं गृहे स्थितवती । यदा पाककार्यम् आरब्धं तदा तया श्रुतपूर्वः याचकस्य ध्वनिः

श्रुतः । याचकः तैलम् अयाचत । ''केभ्यश्चित् दिनेभ्यः पूर्वं मया यत् तैलं दत्तं तस्मात् भवतः कण्डूयनम् अपगतं स्यात् खलु ? अद्यापि तैलं ददामि । स्वीकरोतु'' इति उक्त्वा सा गृहस्य अन्तः गत्वा तैलम् आनीय तस्मै दत्तवती ।

सः याचकः तैलेन शरीरम् अलिम्पत् । ''भवान् स्नात्वा आगच्छतु । तावता अहं भोजनदानाय सर्वं सज्जीकरिष्यामि'' इति अवदत् स्नुषा ।

सः याचकः स्नात्वा पर्णपात्रेण सह आगतवान् । भोजनानन्तरं सः तां स्नुषाम् आशिषा अनुगृह्णन् अवदत् - ''भवती पत्या सह दीर्घकालं सुखजीवनं यापयतु'' इति । तदनन्तरं सः छदेः आधारदण्डानां मध्ये पर्णपात्रं स्थापयित्वा ततः निर्गतवान् । स्नुषा एतत् लक्षितवती ।

सायं सर्वे भोजनार्थम् उपविष्टवन्तः । तृतीयस्नुषया कृतः पाकः नितरां स्वादुः आसीत् । एतत् लक्षितवान् कृषिकः अवदत् - ''सर्वं विलक्षणम् इति भासते । एकस्मिन् शनिवासरे आहारः अदृश्यतां गतः । पुनः अपरस्मिन् शनिवासरे आहारः कीटैः पूर्णः आसीत् । किन्तु अद्य सः नितरां स्वादुः अस्ति । अस्मद्विषये कुपिताः देवाः इदानीं सन्तुष्टाः सन्ति इति भाति'' इति ।

तदा भोजनं कुर्वती कनिष्ठा स्नुषा, आत्मना यदा पाकः कृतः तस्मिन् शनिवासरद्वये अपि याचकस्य आगमनं, तैलभोजनयोः दानं, याचकेन छदेः आधारदण्डानां मध्ये कृतं पर्णपात्रस्य स्थापनं च विस्तरेण उक्तवती ।

एतत् श्रुतवान् कृषिकः झटिति उत्थाय पर्णपात्राणाम् अन्वेषणाय गतः । आदौ तेन पर्णपात्रद्वयं प्राप्तं, यच्च शिलाखण्डैः पूर्णम् आसीत् । ततः अन्यत् पर्णपात्रद्वयं प्राप्तम् । तदुभयम् अपि सुवर्णनाणकैः पूर्णम् आसीत् । सर्वं दृष्टवतां गृहसदस्यानां मुखे महत् आश्चर्यं दृश्यते स्म । ज्येष्ठा मध्यमा च स्नुषे स्मृतवत्यौ यत् यदा याचकः आगतः तदा तैलभोजनयोः अदानेन एव सः प्रतिप्रेषितः इति ।

कृषिकः अवदत् - ''अहं चिन्तयामि यत् शनीश्वरः एव याचकरूपेण उपस्थितः आसीत् इति । इदानीं सः अस्माकं विषये सन्तुष्टः अस्ति'' इति ।

प्रतिवेशिभिः पार्श्वग्रामस्थैः च एषा कथा श्रुता । तस्मात् दिनात् शनीश्वराय तैलसमर्पणपरम्परा आरब्धा । शनिवासरे शनीश्वरस्य पूजनम् अपि आरब्धम् ।






# पञ्चायुधः

ब्रह्मदत्तः यदा काशीनगरं परिपालयन् आसीत् तदा बोधिसत्त्वः युवराजरूपेण अवतारधारणं कृतवान् । तस्य नामकरणार्थं विभिन्नेभ्यः देशेभ्यः विद्वांसः ज्योतिषिकाः च समागताः । ते राजानम् उद्दिश्य – ''भवतः पुत्रः कश्चित् महापुरुषः भविष्यति इति भाति । पञ्च आयुधानि धृत्वा एषः जगतः जेता जगद्विख्यातः च भविष्यति'' इति उक्तवन्तः । अतः बालकस्य नाम 'पञ्चायुधः' इति कृतम् ।

कालः अतीतः । यदा बालः अवगमन-सामर्थ्यं प्राप्तवान् तदा राजा तं विद्याभ्यासाय गान्धारदेशस्य तक्षशिलानगरस्थं गुरुकुलं प्रति प्रेषितवान् । पञ्चायुधः तत्र कानिचन वर्षाणि यावत् विद्याभ्यासं कृतवान् । सः तत्र सकलासु विद्यासु पारङ्गतः जातः । गुरुकुले समावर्तन-संस्कारस्य समाप्तेः अनन्तरं सः गृहं प्रति यदा प्रस्थितः तदा गुरुः आशीर्वादपुरस्सरं शिष्याय पञ्च आयुधानि दत्तवान् । गुरोः अनुज्ञां प्राप्य पञ्चायुधः काशीं प्रति प्रस्थितः ।

पञ्चायुधेन घोरेण अरण्यमार्गेण गन्तव्यम् आपतितम् । तेन मार्गेण गमनसमये तेन केचन ऋषिमुनयः मिलिताः । ते पञ्चायुधम् उक्तवन्तः – ''भोः, दर्शनेन तु भवान् बालः इव दृश्यते । अस्मिन् अरण्ये रोमाञ्चनामकः कश्चन भयङ्करः राक्षसः निवसति । यदि सः भवन्तं पश्येत् तर्हि भवतः आयुः समाप्तं भवेत् । अतः भवान् एतं मार्गं परित्यज्य अन्यं मार्गम् आश्रयति चेत् एव वरम्'' इति ।

पराक्रमिणि पञ्चायुधे मुनीनाम् उपदेशस्य कोऽपि प्रभावः न अभवत् । तेषाम् उपदेश-वचनस्य उपेक्षां कृत्वा सः तेनैव मार्गेण अग्रे गतवान् । मार्गे एकत्र सः तालवृक्षोन्नतमितं पर्वताकारकं रोमाञ्चराक्षसं दृष्टवान् ।

सः राक्षसः भयङ्कराकारकः आसीत् । तस्य शिरः गजस्य इव बृहदाकारकम् आसीत् । तस्य नेत्रे अग्निकणान् वर्षतः इव दृश्येते स्म । गजदन्तौ इव दीर्घे दंष्ट्रे तस्य । तस्य समग्रे शरीरे दीर्घाः केशाः आसन् ।

रोमाञ्चराक्षसः पञ्चायुधस्य मार्गे स्थित्वा हुँङ्कुर्वन् - ''कियत् धार्ष्ट्यं भवतः ? मम नामश्रवणमात्रेण मनुष्याः भीत्या कम्पन्ते । अहम् इदानीं भवन्तं गिलामि'' इति उक्तवान् ।

पञ्चायुधः किञ्चिदपि विचलितः न जातः । सः तं राक्षसम् उद्दिश्य - ''राक्षसराज ! सर्वं ज्ञात्वा एव अहम् एतेन मार्गेण आगतवान् अस्मि । जागरूको भवतु भवान् एव । यदि भवान् मम समीपम् आगमिष्यति तर्हि भवतः दुर्गतिः निश्चिता'' इति भाययन् धनुषि बाणं योजयित्वा तं लक्ष्यीकृत्य प्रयुक्तवान् ।

सः बाणः राक्षसेन धृतं चर्म व्यदारयत् । राक्षसस्य शरीरस्य तु कापि हानिः न अभवत् । ततः पञ्चायुधः रोमाञ्चम् उद्दिश्य बाणवर्षणम् अपि कृतवान् । किन्तु पञ्चायुधस्य सोऽपि प्रयत्नः विफलः जातः । अन्ते सः विषमयान् बाणान् प्रयुक्तवान् । तथापि राक्षसस्य शरीरं हानिं न प्राप्नोत् ।

तदा सः राक्षसः व्याघ्रः इव हूँङ्कुर्वन् पञ्चायुधस्य उपरि आक्रमणं कृतवान् । पञ्चायुधः खड्गम् आकृष्य राक्षसं प्रहृतवान् । किन्तु राक्षसः अविचलः एव आसीत् ।

तदा पञ्चायुधः राक्षसम् उद्दिश्य - ''मम अभिज्ञाने विफलः भवान् मूर्खताम् आचरन् अस्ति । मम नाम पञ्चायुधः इति । सम्यक् स्मरतु । अरण्यप्रवेशसमये अहं मम आयुधानि केवलम् अवलम्ब्य न प्रविष्टवान्'' इति वदन् मुष्टिं दृढां कृत्वा राक्षसं प्रहृतवान् । राक्षसः अविचलः एव आसीत् ।

राक्षसः उच्चैः हसन् - ''बाल ! भवतः धैर्यस्य दर्शनात् ज्ञायते यत् भवान् सामान्यः न इति । मादृशेन सह युद्धकरणस्य साहसं भवान् कृतवान् अस्ति । इतरे तु मम दर्शनेनैव मूर्च्छां प्राप्नुवन्ति । मम दर्शनतः भवतः भयं न जातम् । एतस्य कारणं किम् ?'' इति पृष्टवान् ।



''मम शरीरे वज्रायुधसदृशः खड्गः एकः अस्ति । सः खड्गः नाम ज्ञानम् । यदि भवान् मां गिलति तर्हि सः खड्गः भवतः शरीरं विदारयेत्'' इति उक्तवान् पञ्चायुधः ।

राक्षसः क्षणं यावत् विचिन्त्य – 'रे बाल ! भवतः वचनम् अर्थपूर्णम् अस्ति इति भाति । तदस्तु तावत् । एतावत्तु सत्यं यत् भवान् निर्भयः शूरः पराक्रमी च । अहं भवन्तं गिलामि चेत् जीर्णं कर्तुं न शक्नोमि । भवान् यत्र इच्छति तत्र गन्तुम् अर्हति'' इति उक्तवान् ।

पञ्चायुधरूपेण अवतारं गृहीतवान् बोधिसत्त्वः रोमाञ्चराक्षसम् आशीर्वादेन अनुगृहीतवान् । अनन्तरं सः तम् उक्तवान् – ''भवान् मम विमोचनं यत् कृतवान् तत् तु समीचीनम् । किन्तु अग्रे भवतः का गतिः ? न जाने, भवता अस्मिन् जगति कतिवारं पुनः पुनः जन्म प्राप्य कुकर्माणि कुर्वता निकृष्टं जीवनं यापनीयम् इति'' इति ।

तदा सः राक्षसः – ''महात्मन्, एवं तर्हि अज्ञानान्धकारात् मुक्तः भवितुं कोऽपि मार्गः अस्ति किम् ?'' इति पृष्टवान् ।

तदा पञ्चायुधः – ''अस्मिन् अरण्ये भवान् गमनागमनं कुर्वतां जनानां मारणं कृत्वा तान् खादति । एवं रीत्या दिने दिने भवतः पापस्य वर्धनं भवत् अस्ति । यावत् भवतः पापकर्माणि वर्धन्ते तावत् भवता एतत् निकृष्टं राक्षसजन्म प्राप्तव्यम् एव । मोक्षलाभः भवता प्राप्तुं न शक्यते एव । यदि भवान् उत्तमं मानवजन्म प्राप्तुम् इच्छति तर्हि भवता पापकृत्यानि त्यक्तव्यानि'' इति उक्तवान् ।

एवम् उपदिश्य बोधिसत्त्वः मानवानां हितदृष्ट्या राक्षसैः पालनयोग्यानि पुण्यकार्याणि विवृत्य आवश्यकानि पञ्च सूत्राणि बोधितवान् । उत्तममानवत्वप्राप्तेः पञ्च तन्त्राणि अपि उपदिष्टवान् ।

तदारभ्य रोमाञ्चराक्षसः राक्षसकृत्यानि परित्यक्तवान् । न केवलं तावत्, अरण्यमार्गेण गमानागमनकर्तृणां सत्कारम् अपि आरब्धवान् सः । अनन्तरं सः धर्मबुद्धिनाम्ना प्रसिद्धः अभवत् ।

एवं बोधिसत्त्वस्य उपदेशेन भयङ्करः राक्षसः अपि सन्मार्गम् आश्रितवान् ।





# विष्णुपुराणम्

श्रीमत्याः स्वयंवरे भागग्रहणाय विविधेभ्यः देशेभ्यः बहवः राजानः आगताः । विष्णुना दत्तेन 'हरिरूपेण' नारदः अपि उपस्थितः । तस्य तत् वानररूपं दृष्ट्वा उपस्थिताः सर्वे हसितवन्तः । 'विष्णुः मां वानरं कृतवान् अस्ति' इति यदा ज्ञातं तदा नारदः नितरां लज्जितः जातः ।

वरमालां गृहीतवती श्रीमती विष्णुं ध्यातवती । तत्समनन्तरम् एव विष्णुः तत्र प्रत्यक्षः जातः । श्रीमती तस्य कण्ठे वरमालां समर्पितवती, तेन सह वैकुण्ठं गतवती च ।

एतत् दृष्ट्वा नितरां क्रुद्धः नारदः पर्वतं स्वपक्षीयं कृत्वा अम्बरीषसमीपं गतः। क्रोधान्धः सः यदा अम्बरीषाय शापं दातुम् उद्युक्तः तदा विष्णोः चक्रं तस्य प्रहाराय आगच्छत् ।

तदा प्राणरक्षणाय नारदः पर्वतः च वैकुण्ठं प्रति धावितवन्तौ । तत्र विष्णुना सह स्थिता श्रीमती तेन दृष्टा । तस्मात् महान् क्रोधः तेन प्राप्तः । सः विष्णवे शापं दत्तवान् - ''यां श्रीमतीं भवान् वञ्चनया अपहृतवान् सा अपि अपहृता भवतु । तस्याः वियोगेन भवान् सन्तप्तः भवतु । मम अपमाननाय भवता मह्यं वानररूपं यत् दत्तं तस्यैव वानरकुलस्य साहाय्यं भवता याचनीयं भवतु'' इति ।

नारदस्य शापं श्रुत्वा विष्णुः मन्दहासं प्रकटितवान् । श्रीमती च स्वस्य वास्तविकेन लक्ष्मीरूपेण तत्र तिष्ठन्ती नारदपर्वतयोः मायाजालम् अपनीतवती । यदा मायाजालम् अपगतं तदा नारदेन आत्मना कृतः प्रमादः अवगतः । सः लज्जया विष्णोः पादौ गृहीत्वा क्षमां याचितवान् ।

शापः दत्तः यत् तदर्थं नितरां खिन्नः



आसीत् नारदः । सः पश्चात्तापम् अनुभवन् बहुधा रोदनं कृतवान् । तदा विष्णुः नारदस्य सान्त्वनं कुर्वन् उक्तवान् - ''भवान् तु त्रिकालदर्शी अस्ति । भाविनि काले किं भविष्यति इति भवान् जानाति एव । अतः पश्चात्तापस्य न काऽपि आवश्यकता अत्र । भवतः शापः अपि मम सङ्कल्पस्य अनुगुणतया एव प्रवृत्तः । भवतः वचनस्य अनुगुणं रामावतारसमये सर्वं प्रवर्तिष्यते । तस्मात् लोककल्याणम् एव भविष्यति'' इति ।

एतदनन्तरं विष्णुः अम्बरीषस्य रक्षणाय स्वस्य चक्रं नियुक्तवान् ।

दूर्वासोमहामुनिः स्वस्य तपोबलस्य विषये महान्तं गर्वं वहति स्म । तस्मिन् ईर्ष्याभावः अपि अधिकः एव आसीत् ।

कदाचित् सः स्वस्य आश्रमात् बहिः निर्गन्तुम् उद्युक्तः । तावता तत्र नारदमहर्षिः उपस्थितः । तं दृष्ट्वा दूर्वासाः उक्तवान् - ''कलहरूपेण भोजनेन भवदुदरं पूर्णम् । अतः भवान् प्रसन्नचितः अस्ति'' इति ।

तदा नारदमुनिः दूर्वाससं प्रणम्य अवदत् - ''भवदुक्तं भोजनम् एतावता अपि न लब्धम् । किन्तु तत् अचिरात् एव लभ्येत इति भाति । बुभुक्षा तु महती अस्ति । तदास्तां तावत् । मम प्रसन्नतायाः कारणं तु महाविष्णुभक्तस्य अम्बरीषस्य दर्शनम् । तस्य भक्तिं दृष्टवतः मम मनः आनन्दसागरे निमग्नम् अस्ति'' इति ।

अम्बरीषस्य प्रशंसां श्रुतवतः दूर्वाससः मनः असूयाग्रस्तं जातम् । सः सन्देहेन अपृच्छत् - ''किं सः तादृशः महाभक्तः, येन भवान् आनन्दसागरे निमग्नः भवेत् ? किं वैशिष्ट्यं तस्य ?'' इति ।

''सः महाभक्तः इत्यत्र नास्ति सन्देहः । विष्णोः महान् अनुग्रहः अस्ति तस्मिन् । सः राजा सन् अपि ऋषिकल्पः अस्ति । सः नियततया द्वादशीव्रतम् आचरति । तस्य दर्शनात् भवान् स्वयं ज्ञास्यति यत् मम प्रशंसा मिथ्या न इति । विष्णुभक्तः सः ज्येष्ठेषु महान्तम् आदरं दर्शयति अपि । यदि भवान् तत्समीपं गच्छेत् तर्हि भवतः दर्शनेन सः आत्मानं धन्यं मन्येत'' इति उक्त्वा 'नारायण नारायण' इति विष्णोः नाम जपन् ततः अन्तर्हितः अभवत् नारदः ।

अम्बरीषः एकादश्याम् उपवासं कृत्वा द्वादश्यां पारणाम् आचरति स्म । एतत् तस्य व्रतम् आसीत् ।

द्वादश्यां दूर्वासाः तस्य प्रासादम् आगतवान् । तस्य दर्शनात् नितरां सन्तुष्टः सन् अम्बरीषः अर्घ्यपाद्यादिभिः तं विशेषतः सत्कृत्य प्रार्थितवान् - ''भवान् अद्य अत्रैव भोजनं करोतु'' इति ।

भोजनाय निमन्त्रणम् अङ्गीकृत्य दूर्वासाः ततः स्नानार्थं गतवान् । महान् समयः अतीतः चेदपि सः न आगतः एव । द्वादशीव्रतस्य पारणासमयः अतिक्रममाणः आसीत् । यदि अम्बरीषः युक्ते समये पारणां न कुर्यात् तर्हि व्रतभङ्गः स्यात् । किन्तु अतिथिं भोजनाय निमन्त्र्य तस्य अनुपस्थितौ भोजनसेवनम् अपि अनुचितं स्यात्, धर्मशास्त्रस्य विरोधः अपि स्यात् । एतादृश्यां स्थितौ किं करणीयम् इति अजानन् सः चिन्ताग्रस्तः जातः ।



तदा पण्डिताः अवदन् - ''पारणारूपेण जलं सेव्यताम् । तेन पारणाव्रतम् अपि अनुष्ठितं भवति । अतिथिना सह भोजनम् अपि शक्यते । एतेन उभयमपि सिद्धं भवति, पापलेपश्च न भवति'' इति ।

अम्बरीषः एतां सूचनां पुरस्कुर्वन् जलसेवनेन पारणाव्रतं समापितवान् । किन्तु किञ्चित्कालानन्तरं प्रत्यागतः दूर्वासाः महता क्रोधेन अम्बरीषम् अतर्जयत् - ''अये नीचराज ! पापिन् ! अधर्मव्यसनिन् ! आत्मानं विष्णोः महाभक्तं भावयतः भवतः महान् गर्वः । किन्तु सर्वमेतत् मिथ्या । भोजनाय मां निमन्त्रितवान् भवान् मम आगमनात् पूर्वम् एव भोजनं कृतवान् । मम अपमानाय प्रयत्नः कृतः भवता । मम नाम्नः श्रवणमात्रेण एव त्रयः अपि लोकाः कम्पन्ते । तादृशस्य मम अपमाननं न क्षेमाय । एषोऽहं भवते शापं दास्यामि'' इति ।

तदा अम्बरीषः तस्य पादौ गृहीत्वा - ''मुनिवर्य ! व्रतभङ्गः न भवेत् इति उद्देशेन, पण्डितानां सूचनायाः अनुगुणं, वेदनियमम् अनतिक्रममाणः जलपारणामात्रं कृतवान् अस्मि । भोजनाय अहं भवन्तं प्रतीक्षमाणः एव अस्मि । अतः कृपया भवान् शान्तः भवतु । मयि दयां प्रदर्शयतु'' इति प्रार्थितवान् ।

''क्षमा दया इत्यादीन् शब्दान् अहं न जानामि । आत्मना कृतस्य पापस्य फलम् अनुभोक्तव्यम् एव भवता । आत्मनः भक्तिः एव गरीयसी इति खलु भवान् चिन्तयति ? मम तपश्शक्तिः श्रेष्ठा, उत भवतः भक्तिः इति इदानीं जानातु भवान्'' इत्येवं गर्जन् दूर्वासाः अम्बरीषं पादेन प्रहृत्य स्वस्य जटाबन्धं



शिथिलीकृतवान् । दूर्वाससः तपश्शक्तिः सर्वाः सिद्धयः च तस्य जटासु निहिताः आसन् । यदा सः जटानां विधूननं करोति तदा तदीयाः शक्तयः जागरिताः भवन्ति स्म । तेन यथा उच्यते तथा कार्यं कुर्वन्ति स्म च ।

क्रुद्धः दूर्वासाः एकां दीर्घां जटां बलात् विधूय योगदण्डेन तस्याः स्पर्शं कृतवान् । तस्याः जटातः अग्निकणानां वर्षणम् आरब्धम् । ते अग्निकणाः सर्वत्र प्रसृताः । आकाशः धूमेन व्याप्तः जातः । तस्मात् धूमराशितः कश्चन घोरः राक्षसः उत्पन्नः । तस्य नाम कृत्यः इति ।

प्रादुर्भूतः कृत्यः अम्बरीषस्य ग्रहणाय उद्युक्तः । यावत् सः अम्बरीषस्य समीपम् आगतः तावता सुदर्शनचक्रं तत्र प्रत्यक्षं जातम् । तत् अग्निवर्षणम् अकरोत् । तस्मात् कृत्यः दग्धः सन् भस्मसात् जातः ।

एतत् दृश्यं दृष्ट्वा दूर्वासाः आश्चर्यचकितः जातः । कृत्यराक्षसं मारितवत् चक्रं दूर्वाससम् अभिलक्ष्य आगच्छत् ।

क्रुद्धः दूर्वासाः अपरां जटाम् अपनीय सुदर्शनचक्रं लक्ष्यीकृत्य क्षिप्तवान् । जटातः काचित् विशाला शिला उत्पन्ना । सा चक्रस्य अवरोधम् अकरोत् । किन्तु चक्रस्य स्पर्शात् सा शिला चूर्णिता जाता । अग्रे आगच्छत् चक्रं दृष्ट्वा दूर्वासाः अपरां जटां तदुद्दिश्य क्षिप्तवान् । एतस्मात् समग्रः आकाशः काल-मेघैः आवृतः जातः । तेषां मध्ये चक्रं कुत्रापि अदृश्यं जातम् । किन्तु अनन्तरक्षणे चक्रम् उग्रान् किरणान् उद्वमत् मेघान् ज्वालयित्वा अग्रे आगच्छत् ।

एतत् दृष्ट्वा दूर्वासाः नितरां भीतः । सः ततः पलायनं कर्तुम् आरब्धवान् । सुदर्शनचक्रं तस्य अनुसरणम् अकरोत् । चक्रात् निर्गताः किरणाः दूर्वाससः जटाः अदहन् । तस्मात् दूर्वासाः शक्तिहीनः जातः । तस्य समग्रं तपोबलम् अपि विनष्टम् ।

धावन् दूर्वासाः ब्रह्मलोकं प्रविष्टवान् । तत्र तेन नारदः दृष्टः । नारदः धावन्तं दूर्वाससम् अपृच्छत् - ''एतावता वेगेन कुत्र वा गम्यते ?'' इति । किञ्चित् स्थित्वा उत्तरं दातुं दूर्वाससः समयः न आसीत् । अतः सः पृष्ठतः आगच्छत् चक्रं हस्तसङ्केतेन प्रदर्श्य ब्रह्मणः समीपं गत्वा तदीयौ पादौ गृहीतवान् ।

''आर्य ! ब्रह्मदेव ! मां रक्षतु कृपया । सुदर्शनचक्रं मां मारयितुम् आगच्छत् अस्ति'' इति ब्रह्माणम् अवदत् सः ।

तदा ब्रह्मा स्वस्य असहायकतां प्रदर्शयन् अवदत् - "ऋषिवर ! विष्णोः नाभिकमलात् एव मम उत्पत्तिः इति भवान् जानाति एव । यस्य नाभिकमलात् मम जन्म जातं तस्य चक्रं रोद्धुं मम सामर्थ्यं नास्ति" इति ।

दूर्वासाः धावन् कैलासपर्वतं गत्वा शिवं प्रणम्य प्राणरक्षणं याचितवान् ।

शिवः सुदर्शनचक्रं सकृत् दृष्ट्वा अवदत् - "एतत् तु विष्णोः चक्रम् । एतस्य स्वामी यः अस्ति तम् एव शरणं गच्छतु । ऋते विष्णोः, अन्यः कोऽपि साहाय्यं कर्तुं न अर्हति" इति ।

दूर्वाससः अहङ्कारः पूर्णतः विनष्टः आसीत् । तस्य समग्रा तपश्शक्तिः विनष्टा आसीत् । अतः आत्मरक्षणार्थं स्वसामर्थ्यं तु न आसीत् तस्य । ब्रह्मा शिवः चापि यदा असहायकतां प्रदर्शितवन्तौ तदा अनन्यगतिकतया सः विष्णोः समीपं गतवान् ।

"मया बहोः कालात् पूर्वम् एव अम्बरीषस्य रक्षणाय सुदर्शनचक्रं नियुक्तम् अस्ति । इदानीं तत् चक्रम् अम्बरीषस्यैव आज्ञां पालयति । अतः भवता अम्बरीषसमीपं गत्वा एव रक्षणं प्रार्थनीयम्" इति वदन् विष्णुः अपि स्वस्य असहायकतां प्रकटितवान् ।

विष्णुः रक्षेत् एव इति दूर्वाससः विश्वासः आसीत् । किन्तु सः अपि भग्नः जातः । प्राणाः तु कथञ्चित् रक्षणीयाः आसन् एव । स्वस्य स्थितिं चिन्तयतः दूर्वाससः अहङ्कारः अपगतः । आत्मानं क्षुद्रं जीविनम् अमन्यत सः । गर्वस्य अपगमस्य अनन्तरम् अम्बरीषं रक्षणं प्रार्थयितुं सङ्कोचः न अनुभूतः तेन । बलहीनः सामान्यः पुरुषः इव सः अम्बरीषस्य चरणौ गृह्णन् रक्षणं प्रार्थितवान् ।



एतत् दृष्ट्वा सुदर्शनचक्रं ततः स्वयम् अदृश्यताम् अगच्छत् । एतस्याः घटनायाः अनन्तरम् अम्बरीषः विष्णोः परमभक्तेषु अन्यतमः जातः ।

सूर्यवंशीयेषु गाधिः प्रतापी कश्चन राजा । विश्वामित्रः तस्यैव पुत्रः आसीत् ।

विश्वामित्रः कृताश्वतः विद्यां गृहीतवान् आसीत् । अनेकानि दिव्यास्त्राणि प्राप्तानि आसन् तेन । दिव्यास्त्रप्रयोगे तस्य महत् प्रावीण्यम् आसीत् ।

राजत्वप्राप्तेः अनन्तरं कदाचित् वसिष्ठ-महर्षेः आश्रमं गतवान् सः । वसिष्ठः काम-धेन्वाः साहाय्येन विश्वामित्रस्य सहस्राधिकेभ्यः सैनिकेभ्यः भूरिभोजनस्य व्यवस्थाम् उप-कल्पितवान् । एतत् दृष्ट्वा विश्वामित्रः वसिष्ठम् उक्तवान् - ''एतां कामधेनुं मह्यं ददातु । अहं भवते दशलक्षं धेनूः दास्यामि'' इति ।

किन्तु वसिष्ठः कामधेन्वाः दानं निराकृत-वान् । एतस्मात् विश्वामित्रः नितरां कुपितः । सः सैनिकान् आज्ञापितवान् - ''बलात्कारेण वा एतां कामधेनुं नयन्तु भवन्तः'' इति ।

तदवसरे काचित् विलक्षणा घटना घटिता । सहस्रशः सैनिकाः उत्पन्नाः कामधेन्वाः कायात् । ते विश्वामित्रस्य सैनिकान् क्षणाभ्यन्तरे संहृतवन्तः । एतां घटनां दृष्टवतः विश्वामित्रस्य महत् आश्चर्यम् । राजशक्तितः अपि योगशक्तिः एव गरीयसी इति अवगतवान् सः ।

ततः सः राज्यशासनं परित्यज्य तपसि लीनः जातः । अखण्डं घोरं तपः आचरितं तेन । तस्य परिणामतः सः अपि वसिष्ठः इव ब्रह्मर्षिः जातः ।

कदाचित् तेन कश्चन महायज्ञः आरब्धः । राक्षसराजस्य रावणस्य अनुचरौ सुबाहुः मारीचश्च आकस्मिकतया यज्ञभूमिम् आगत्य सर्वं नाशयित्वा गच्छतः स्म । विश्वामित्रस्यापि यज्ञे तौ विघ्नम् उत्पादयतः स्म । एतस्मात् खिन्नः विश्वामित्रः तपसे हिमालयं गतवान् ।

समाधिस्थितौ विश्वामित्रेण ज्ञातं यत् लोक-कल्याणाय विष्णुः रघुवंशे रामरूपेण जन्म प्राप्तवान् अस्ति इति, धर्मनाशाय उद्युक्तानां राक्षसानां संहाराय एव सः एतम् अवतारं प्राप्तवान् इति च । 'रामस्य शस्त्रविद्याबोधनाय भवता गन्तव्यम्' इति तेन तत्रैव आदेशः प्राप्तः । ततः सः अयोध्यां प्रति प्रस्थितः ।



# अमेरिकीयाः मूलवासिनः कथं निर्मिताः ?



प्राचीनकालस्य घटना एषा । तदा जगति पर्वताः, नद्यः, खाताः, तरुलतादयः च आसन्, न नरनार्यादयः ।

एकस्मिन् दिने प्रभाते रेड्इण्डियन्देवता मैनिटा प्रसन्नमुद्रया जागरणं प्राप्तवती । पृथिव्यां दृष्टिं पातयन्ती सा अचिन्तयत् यत् इदानीं पृथिव्यां मानवानां निर्माणाय कालः सम्प्राप्तः इति । सा नदीतः मृत्तिकां स्वीकृत्य मनुष्याकृतिं निर्मितवती । तस्याः आकृतेः विविधानि अङ्गानि सा जागरूकतया कल्पितवती ।

तपनात् एव आकृतेः दृढता भवति इति चिन्तितवती सा आत्मना निर्मिताम् आकृतिं महापात्रे कस्मिंश्चित् स्थापयित्वा पात्रम् आवरणेन पिधाय पात्रस्य अधः अग्निं प्रवर्तितवती ।

मैनिटा विश्रान्त्यर्थं वृक्षस्य अधः छायायाम् उपविष्टवती । आदिनं कार्यकरणात् नितरां श्रान्ता आसीत् सा । अतः अचिरात् एव सा निद्रायां विलीना जाता ।

किन्तु अल्पे एव काले कश्चन दाहगन्धः ताम् अजागरयत् । सा झटिति उत्थाय पात्रस्य आवरणम् अपनीतवती । किन्तु तावता पात्रस्था आकृतिः दग्धा सती कृष्णवर्णतां गता आसीत् ।

'भवतु नाम । प्रवृत्तस्य विषये चिन्तनेन न किमपि प्रयोजनम् । पृथिव्याम् एषा अपि काचित् जातिः भवतु नाम' इति विचिन्त्य तां मानवाकृतिं भूमौ स्थापितवती सा ।

अनन्तरदिने मैनिटा अपराम् आकृतिं निर्मितवती । एतदवसरे तप्तीकरणविषये सा विशेषावधानवती आसीत् । गतदिने यथा

तथा अद्य आकृतिः दग्धा न भवेत् इति विचिन्त्य आतङ्कग्रस्ता सा शीघ्रम् एव पात्रस्य आवरणम् अपनीतवती । एतदवसरे आकृतिः सम्यक् अतप्ता सती श्वेता दृश्यते स्म ।

'भवतु नाम । लोके श्वेतजातिः अपि काचित् भवतु' इति विचिन्त्य ताम् अपि आकृतिं भूमौ स्थापितवती सा ।

तृतीये दिने अपि देवतया अपरा आकृतिः निर्मिता । सा आकृतिः दग्धा न भवेत् इत्येतदर्थं सा तैलेन लिप्त्वा आकृतिं पात्रे स्थापितवती । किन्तु अयं प्रयोगः अपि न सफलः । सा आकृतिः न श्वेता, न वा कृष्णा, अपि तु पीतवर्णोपेता इव आसीत् ।

'एषा अपि अपरा जातिः भवतु' इति विचिन्त्य ताम् अपि आकृतिं भूमौ स्थापितवती सा ।

तया चतुर्थी आकृतिः निर्मिता । एतावता तया अनुभवः प्राप्तः आसीत् । अतः अग्निं यथायोग्यं कृत्वा अल्पतैलमिश्रणं कृत्वा सा आकृतिं पात्रे स्थापितवती । मूर्तेः तप्ततां पुनः पुनः परीक्षमाणा अपि आसीत् सा । एतस्मात् तया योग्या आकृतिः प्राप्ता । सा रक्तबहुला पीतच्छायोपेता च आसीत् ।

''मया निर्मातुम् इष्टा आकृतिः एषा एव । एषा रक्तजातिः इति नाम प्राप्नोतु'' इति स्वगतं वदन्ती सा ताम् आकृतिं भूमौ स्थापितवती । सा एव जातिः 'रेड् इण्डियन्' इति कथ्यते ।

रेड्-इण्डियन्जनानां पौराणिकी कथा एषा मानवानां जातिः कथं निर्मिता इत्येतत् सम्यक् निरूपयति ।





# कोषाधिकारिणः नियुक्तिः

चन्द्रचूडः प्रमोददेशस्य राजा । सः प्रजारञ्जकः । प्रजाः पुत्रवत् पालयति स्म सः । तस्य शासनकाले देशे सर्वेषां सौख्यम् आसीत् । तस्य मन्त्रिणः कोषाधिकारिप्रभृतयः च समर्थाः एव आसन् ।

अथ कदाचित् वृद्धः कोषाधिकारी दिवं गतः । तस्य स्थाने कः नियोक्तव्यः इत्यत्र राज्ञा समस्या अनुभूता ।

दिवं गतस्य कोषाधिकारिणः पुत्रस्य नाम विभीषणः इति । सः सामर्थ्येन पितरम् अपि अतिशेते स्म । अतः तमेव कोषाधिकारिणं कर्तुम् इच्छति स्म राजा । किन्तु तत्र केचन क्लेशाः आसन् ।

कोषाधिकारिपदं प्रमुखम् इत्यतः तत् स्थानं प्राप्तुम् इच्छन्ति स्म बहवः । तेषु राज्ञ्याः बन्धुः कश्चित्, राज्ञः भगिनीपतेः बन्धुः कश्चित् च अन्यतमौ आस्ताम् । राज्ञी, राज्ञः भगिनी च राजानं सानुरोधं वदतः स्म यत् मम बन्धुः एव कोषाधिकारित्वेन नियुक्तः भवेत् इति । यदि एकस्याः बन्धोः नियुक्तिः स्यात् तर्हि अपरस्याः खेदः । भवत्योः बन्धुः न नियुज्यते इति साक्षात् वक्तुम् अपि न शक्यते । यतः उभयोः अपि बलम् अधिकम् अस्ति ।

एतस्याः समस्यायाः परिहारः कथमिति राज्ञा न ज्ञातम् । अतः सः वृद्धं मन्त्रिणम् आनाय्य स्वस्य समस्यां विस्तरेण निवेदितवान् ।

तदा वृद्धः मन्त्री बुद्धिवर्मा अवदत् - ''प्रभो ! प्रजाहितम् एव चिन्तनीयं राज्ञा । अतः एतस्मिन् विषये जागरूकतया व्यवहरणीयम् । भवतः निर्णयः कस्यापि खेदाय न भवेत् । अतः भवान् राज्ञ्याः सहोदरं रङ्गदेवं, भगिन्याः पतिं राजगुप्तं च आनाय्य समालोचनं करोतु'' इति ।

मन्त्रिणः सूचनायाः अनुगुणं राजा रङ्गदेवं राजगुप्तं च आनाय्य अवदत् - ''भवन्तौ



उभौ अपि मदीयौ । यौ कोषाधिकारिपदम् इच्छतः तौ भवतोः बान्धवौ एव । अतः भवन्तौ परस्परवार्तालापेन कमपि निर्णयं कुरुताम् । भवतोः ऐकमत्यं स्यात् इति मम अपेक्षा'' इति ।

रङ्गदेवः राजगुप्तः च वार्तालापं कृतवन्तौ । उभयोः अपि प्रबला इच्छा यत् ममैव बन्धुः कोषाधिकारी स्यात् इति । अतः तौ एतद्विषये ऐकमत्यं प्राप्तुं न शक्तवन्तौ ।

''भवान् एव अन्तिमनिर्णयं करोतु'' इति तौ राजानम् उक्तवन्तौ ।

तदा चन्द्रचूडः तौ उक्तवान् - ''भवतोः उभयोः अपि प्रबला इच्छा यत् ममैव बन्धुः कोषाधिकारी स्यात् इति । अतः अहं चिन्तयामि यत् त्रिसदस्यात्मिकायाः मार्गदर्शकसमितेः नियुक्तिः वरम् इति । तेषु त्रिषु सदस्येषु अन्यतमः भवतु राजोद्योगी देवनाथः अपि । न्यायाधिकारिणः सकाशात् भवन्तौ मार्गदर्शकसमितेः रचनासम्बद्धान् नियमान् ज्ञात्वा कोषाधिकारिणं चिनुताम्'' इति ।

राज्ञः वचनस्य तात्पर्यम् अवगतं रङ्गदेवेन राजगुप्तेन च । 'यः देवनाथं स्वपक्षीयं कर्तुं शक्नोति तदीयः अभ्यर्थी कोषाधिकारिपदं प्राप्तुम् अर्हति' इति राज्ञा परोक्षतया सूचितम् इति चिन्तितवन्तौ तौ । अतः राज्ञः एषा व्यवस्था तयोः प्रिया जाता ।

अनन्तरदिने तौ न्यायाधिकारिणं दृष्टवन्तौ । न्यायाधिकारी अवदत् - ''मार्गदर्शकसमितेः यदि सदस्यता भवद्भ्याम् इष्यते तर्हि भवतोः बन्धुः कोऽपि कोषाधिकारिस्थानप्राप्तेः प्रयत्नं कर्तुं न अर्हति'' इति ।

एतदनन्तरं बहुधा विचिन्त्य तौ निर्णीतवन्तौ यत् आवां मार्गदर्शकसमितेः सदस्यौ न भवावः, प्रत्युत उपायेन देवनाथं स्वपक्षीयं कृत्वा इष्टं साधयिष्यावः इति ।

कदाचित् रङ्गदेवः एकान्ते देवनाथेन मिलित्वा अवदत् - ''भवतः निर्णये मम पूर्णः विश्वासः अस्ति । तथापि किञ्चित् ज्ञापयितुम् इच्छामि । अहं राज्ञः प्रियः अस्मि इति भवान् जानाति एव । राजा मम वचनं कदापि न तिरस्करोति । तम् उक्त्वा अहं भवतः सम्मानं कारयिष्यामि । यदि भवान् मम इच्छायाः विरोधं कुर्यात् तर्हि भवन्तं कारागारं प्रेषयिष्यामि । मदीयाय अभ्यर्थिने कोषाधिकारिपदं दाप्यते चेत् भवतः जीवनं सुखमयं भविष्यति'' इति ।

देवनाथः अङ्गीकारपूर्वकं शिरः चालित-

वान्, रङ्गदेवं ततः प्रेषितवान् च ।

एतदनन्तरं राजगुप्तः देवनाथेन मेलितुम् आगतः । 'मम अभ्यर्थी एव कोषाधिकारिपदे नियुक्तः स्यात्, अन्यथा भवता क्लेशः अनुभोक्तव्यः भवेत्' इति साधिकारम् उक्तवान् सः ।

तदा देवनाथः अवदत् - ''महाशय ! भवतः आगमनात् पूर्वं रङ्गदेवः अपि आगत्य स्वस्य अभ्यर्थी एव कोषाधिकारी भवेत् इति सूचयित्वा गतवान् । पदं तु एकम् एव अस्ति । तत्र उभयोः नियुक्तिः तु न शक्यते । बलेन प्रभावेण च रङ्गदेवः भवत्तुल्यः एव । इदानीं किं करणीयं मया ?'' इति ।

यद्यपि राजगुप्तः राज्ञः आत्मीयः एव, तथापि राज्ञ्याः भ्रातृत्वकारणतः रङ्गदेवस्यैव प्रभावः अधिकः ।

एतत् स्मरन् राजगुप्तः - ''रङ्गदेवस्य अभ्यर्थितः अपि मम अभ्यर्थी एव अधिकसमर्थः । अधिकसामर्थ्यवान् एव तस्मिन् पदे नियुक्तः भवेत्'' इति अवदत् ।

यत् प्रवृत्तं तत् सर्वं देवनाथः राजानम् अवदत् । ''अलं चिन्तया । अग्रे किं करणीयम् इति अहं चिन्तयिष्यामि'' इति उक्त्वा तं प्रेषितवान् राजा ।

ततः राजगुप्तं रङ्गदेवं च आनाय्य सः अवदत् - ''देवनाथः सर्वविधानि विवरणानि ज्ञात्वा निर्णीतवान् अस्ति यत् नारायणः नाम कश्चित् कोषाधिकारी स्यात् इति । इदानीं किं करणीयं मया ?'' इति ।

स्वस्य अभ्यर्थी यदि कोषाधिकारी न भवेत्



तर्हि अन्यस्य अभ्यर्थी अपि न भवेत् इति रङ्गदेवराजगुप्तयोः अभिप्रायः आसीत् ।

अतः तौ उक्तवन्तौ – ''देवनाथस्य निर्णयः अनुमन्यते'' इति ।

तदा राजा कृत्रिमं खेदं प्रकटयन् अवदत् – ''नारायणः भवतोः बन्ध्वोः अपेक्षया अपि सामर्थ्येन अनुत्तमः इति भाति मम । समर्थतरस्य एव नियुक्तिः युक्ता खलु भवति ?'' इति ।

''कोषाधिकारी सामर्थ्येन उत्तमः एव स्यात् इति तु सत्यम् एव'' इति उभौ राजबन्धू अपि उक्तवन्तौ ।

तदा राजा अवदत् – ''भवन्तौ मम बान्धवौ । भवतोः सन्तोषः एव मम सन्तोषः । देवनाथेन चितः अभ्यर्थी समर्थः तु न । समर्थः एव चितः भवतु इति भवतोः अपि अपेक्षा । मम भाति यत् दिवङ्गतस्य कोषाधिकारिणः पुत्रः विभीषणः एव एतदर्थं दक्षः इति । पित्रा सम्यक् बोधितः सः एतत् कार्यं कर्तुं समर्थः । एषः मत्पक्षीयः जनः इति चिन्त्यताम् । एतस्य कोषाधिकारिता अनुमन्यताम्'' इति ।

यदि एतत् न अनुमन्येत तर्हि प्रतिपक्षिणः अभ्यर्थी चितः भवेत् । एतत् तु उभयोः अपि सम्मतं न आसीत् । अतः तौ राज्ञः प्रस्तावम् अङ्गीकृतवन्तौ । एवं विभीषणः कोषाधिकारी जातः ।

एतदनन्तरं राजा वृद्धेन मन्त्रिणा मिलित्वा अवदत् – ''लघुः अपि सर्पः महता दण्डेन एव प्रहरणीयः इति काचित् लोकोक्तिः श्रूयते । भवतः मार्गदर्शनम् अनुसृतं मया । तस्मात् इष्टः जनः पदे नियुक्तः अभवत् । अनिष्टौ अभ्यर्थिनौ उपायेन निवारयितुं शक्तं मया'' इति ।

एतत् श्रुत्वा मन्त्री मन्दहासपूर्वकम् अवदत् – ''प्रभो ! वाराङ्गनेव नृपनीतिरनेकरूपा इति किञ्चन वचनं श्रूयते । सर्वदा राज्ञा प्रजानां हितम् एव चिन्तनीयम् । बान्धवानां स्वार्थपरता उपायेनैव निवारणीया । कस्यापि असन्तोषः यथा न स्यात् तथा करणाय महत् कौशलम् आवश्यकं भवति । तादृशं महत् कौशलम् अवलम्ब्य भवता कोषाधिकारिणः नियुक्तिः कृता । भवतः राजनीतिकुशलता प्रशंसार्हा एव'' इति ।





# यशस्विराजस्य न्यायनिर्णयः

यशस्विनामकः राजा कदाचित् सभां समाप्य भोजनार्थं प्रस्थितवान् । तावति काले तस्य दर्शनार्थं कश्चित् ब्राह्मणः आगतवान् ।

"महाराजः इदामिदानीं सभां समाप्य प्रस्थितः अस्ति । अतः अद्य राज्ञः दर्शनं भवता कर्तुं न शक्यते । श्वः आगत्य यद् वक्तुम् इच्छति तद् भवान् वदतु" इति तं ब्राह्मणं द्वारपालकः उक्तवान् ।

राजा एतं वार्तालापं श्रुतवान् । सः - "भोजनं किञ्चित्समयानन्तरं भवतु" इति पाचकं संसूच्य तं ब्राह्मणम् अन्तः आनाय्य तस्य आगमनकारणं पृष्टवान् ।

ब्राह्मणः महता दुःखेन उक्तवान् - "महाराज ! अहं देशान्तरम् अटित्वा महता श्रमेण शतं सुवर्णनाणकानि सम्पादितवान् । देशस्य परिस्थितिः उत्तमा अभवत् इति यदा मया ज्ञातं तदा सुखेन जीवनं यापयितुम् इच्छन् अहम् अत्र आगतः । मार्गे आगमनसमये किमपि कष्टं न सञ्जातम् । चोरबाधा, कष्टबाधा वा कापि न आसीत् । ह्यः सायम् अहं कञ्चन ग्रामं गतः । तावता मयि श्रान्तता उत्पन्ना इति कारणात् तस्मिन् ग्रामे वस्तुं मया निश्चयः कृतः । राजमार्गस्य पार्श्वे स्थिते उद्याने अहं सुखेन सुप्तवान् । प्रातः उत्थानसमये मम अजागरूकताकारणात् मयि स्थितः धनस्यूतः कूपे पतितः । स कूपः लताभिः आवृतः आसीत् । अतः तत्र कूपः अस्ति इति मया न ज्ञातम् । कूपे अवतरणं तु अहं न जानामि । किं करणीयमिति यावत् चिन्तयन् आसं तावति काले तत्र कश्चन आगतः । मम परिस्थितिं ज्ञात्वा सः मां पृष्टवान् - 'अहं भवतः स्यूतं कूपात् आनयामि चेत् मह्यं भवान् किं ददाति ?' इति । तस्य प्रश्नस्य किम् उत्तरं दातव्यमिति मया न ज्ञातम् । अतः मया उक्तम् - 'भवते दातुं मम समीपे किमपि नास्ति । तस्मिन् स्यूते यद् धनमस्ति तत्र भवान् यावत् इच्छति तावत् मह्यं ददातु' इति । सः पथिकः

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'

कूपम् अवतीर्य मम धनस्यूतं ततः उन्नीतवान् । स्यूते स्थितेषु सुवर्णनाणकेषु मह्यं नाणकद्वयं दत्त्वा अवशिष्टं स्वयं स्वीकृतवान् । अहं एतत् न अङ्गीकुर्वन् तं पथिकम् उक्तवान् - 'भवता कृतम् असमीचीनम्' इति । तदा तत्र स्थिताः जनाः सम्भूय मां भर्त्सयन्तः - 'यशस्विराजस्य राज्ये वचनपालनम् अतीव प्रधानम्' इति उक्तवन्तः । एवम् अहं वञ्चितः । यदि भवतः राज्ये न्यायः न स्यात् तर्हि अहं राजभवनस्य पुरतः उपविश्य उपवासं करोमि । अनन्योपायः अस्मि अहम्'' इति ।

राजा तस्य ब्राह्मणस्य वचनं सर्वं श्रुत्वा पृष्टवान् - ''तस्य पथिकस्य नाम किम् ? सः किं करोति ?'' इति ।

''तस्य मुखपरिचयमात्रं मम अस्ति । सः कः, तस्य नाम किम् इत्यादिकम् अहं न जानामि'' इति महता खेदेन उक्तवान् ब्राह्मणः ।

''अस्तु, श्वः अस्मिन् विषये अहं यथायोग्यं करिष्यामि । इदानीं भवान् मया सह भोजनं करोतु'' इति अवदत् राजा ।

ब्राह्मणः एतत् अङ्गीकृतवान् । राजभवने एव तेन सुप्तम् अपि । किन्तु तेन निद्रा न प्राप्ता । 'मदीयं धनं मया कथं वा प्रतिप्राप्येत ?' इति एका एव चिन्ता तस्य ।

अनन्तरदिने राजा ब्राह्मणेन सूचितस्य ग्रामस्य सर्वान् जनान् आनायितवान् । यः वञ्चितवान् सः राज्ञा अभिज्ञातः अपि । अपराधी अपि तानि एव वचनानि उक्तवान्, यानि ब्राह्मणेन उक्तानि आसन् । ''यावदिच्छति भवान् तावत् ददातु इति तेन उक्तम् आसीत् । अतः मया सुवर्णनाणकद्वयं दत्तम्'' इति वदन् सः स्वस्य व्यवहारं समर्थितवान् ।

सर्वं श्रुत्वा राजा निर्णयं श्रावितवान् - ''ब्राह्मणाय प्रतिवादिना अष्टनवतिः सुवर्णनाणकानि दातव्यानि । नाणकद्वयमात्रम् एव स्वयं स्वीकरणीयम्'' इति ।

तदा प्रतिवादी एतस्य विरोधं कृतवान् । ''मया यथा प्रतिज्ञातं तथैव व्यवहृतम्'' इति उक्तवान् सः ।

तदा राजा अवदत् - ''ब्राह्मणेन तु उक्तं यत् यावदिच्छति तावत् दीयताम् इति । भवता इष्टं तु अष्टनवतिः सुवर्णनाणकानि । अतः तानि एव दातव्यानि भवता'' इति ।

एतत् श्रुत्वा सर्वे राज्ञः न्यायनिर्णयक्रमं बहुधा श्लाघितवन्तः ।



14

कानिचन वर्षाणि अज्ञातवासं कृत्वा शान्तिदेवः जयानन्दस्य आश्रमं गच्छति । तत्र सः राज्ञ्याः मरणं, राजकुमारस्य आश्रमे वर्धनं च जानाति । मुनेः आदेशं पालयन् राजा शत्रुनाशनप्रयत्नं न आरभते । प्रजाः वीरसिंहस्य विरोधं कुर्वन्ति । विद्रोहिणां नायकं राजा सैनिकेभ्यः रक्षति ।

# आर्यः

## राजकुमारस्य अज्ञातं रहस्यम्

चित्रम् - गान्धि-अय्यः

पूर्णिमारात्रिः । वसन्तः कांश्चन ग्रामीणान् खातं प्रति नयन् अस्ति ।






शिलायाः पृष्ठभागतः निर्गतं स्वनामोच्चारणध्वनिं शृणोति वसन्तः ।



अहो, महाराजः !

किं करणीयम् अस्माभिः ?

वसन्त ! अमरसिंहः सैनिकैः सह इतः एव आगच्छन् अस्ति । अतः समयः न व्यर्थीकरणीयः ।

वयं तान् धैर्येण सम्मुखीकरिष्यामः ।

ते खातस्य उभयपार्श्वे अपि मार्गस्य अवरोधं करिष्यन्ति । अहं कथमपि आत्मरक्षणं चिन्तयिष्यामि ।

तथा न शक्यते वसन्त ! ते अधिकसंख्याकाः सन्ति । भवन्तः इतः पलायन्ताम् ।

अहम् अवगच्छामि स्थितिम् । यदि ते अस्मान् आक्रामेयुः मारयेयुः वा तर्हि अस्माकम् आन्दोलनं स्थगितं भवेत् ।

मित्राणि । अमरसिंहेन अस्माकं गुप्तस्थानं ज्ञातम् अस्ति । अतः अविलम्बेन इतः निर्गन्तव्यम् अस्माभिः ।

ग्रामीणाः अचिरात् ततः निर्गच्छन्ति । वसन्तः तान् न अनुसरति ।

वसन्त ! इतोऽपि किमर्थं भवान् अत्रैव अस्ति ?

भवन्तम् एकाकिनं परित्यज्य कथम् अहं गच्छेयम् ?

शान्तिदेवः स्वस्य खड्गम् आकृष्य गृह्णन् युद्धाय सन्नद्धः भवति ।

ते अत्र उपस्थिताः सन्ति महाराज !

अहम् एतान् दूरं प्रेषयिष्यामि ।

उभौ सैनिकौ अग्रे आगच्छतः । तयोः पृष्ठतः अमरसिंहः तिष्ठति ।

अग्रे गम्यताम् !

शान्तिदेवः अग्रे गत्वा पूर्णां शक्तिम् उपयुज्य प्रहरति । सैनिकः पतति । तस्य पृष्ठतः केचन सैनिकाः सन्ति ।

प्रतिगम्यताम् ! अन्यथा...

हा हन्त !

अमरसिंहः शान्तिदेवस्य पुरतः अस्ति तथापि तेन सः न अभिज्ञातः ।

वसन्त ! एषोऽहं भवन्तम् ...

पदमात्रम् अग्रे आगम्यते चेदपि भवतः शिरः भूमौ पतिष्यति ।

अहो !

शान्तिदेवः एकेनैव खड्गप्रहारेण अमरसिंहम् अधः पातयति ।

हन्त ! मृतोऽहम् !

अमरसिंहस्य पृष्ठतः स्थितः सैनिकः अपि शान्तिदेवं वसन्तं मन्यते ।

वसन्त ! भवतः अन्तिमः क्षणः सन्निहितः अस्ति !

सैनिकः स्वस्य शूलं शान्तिदेवं लक्ष्यीकृत्य क्षिपति ।

...शान्तिदेवः व्रणितः भवति ।

शान्तिदेवः महतीं पीडाम् अनुभवति ।


राजानं लक्ष्यीकृत्य शूलं क्षिप्तवन्तं सैनिकं दृष्ट्वा ...


वसन्तः स्वस्य खड्गं तं लक्ष्यीकृत्य क्षिपति ।


तस्मात् सः सैनिकः धराशायी भवति ।


अस्माकं सेनापतिः दिवं गतः !


अमरसिंहस्य, अन्यस्य सैनिकस्य च मरणं दृष्ट्वा सर्वे सैनिका पलायन्ते ।
वयम् इतः गत्वा राजानं वीरसिंहं प्रवृत्तं सर्वं वदाम ।


वसन्तः झटिति शान्तिदेवस्य समीपं गत्वा तस्य साहाय्याय उद्युक्तः भवति ।
महाराज ! अहं भवन्तं सुरक्षितं स्थलं प्रति नेष्यामि ।
वसन्त ! किञ्चित् जलम् आवश्यकं मह्यम् ।
अनुवर्तते

# हरिन्मयं जगत्

"वीणा स्वस्य विरामकालं पितामहस्य ग्रामे यापयन्ती अस्ति । ग्रामे यत्र दृष्टिः प्रसार्यते तत्र सर्वत्र हरिन्मयत्वम् एव । पितामहस्य वाटिकायां तु बहवः वृक्षाः । अतः शीतला छाया तत्र । आम्रवृक्षस्य अधः उपविश्य पुस्तकस्य पठनं वीणायै बहु रोचते । वृक्षशाखासु सञ्चरतां चिक्रोडानां गतेः वीक्षणं तु तस्याः विशेषतः प्रियम् ।

''वीणे ! ग्रामे वासः किं भवत्यै अरोचत ?'' – ताम् कदाचित् अपृच्छत् पितामहः ।

''नितराम् आनन्ददायकः भवति अत्र वासः । तत्रापि वाटिकायां क्रीडा मह्यं विशेषतः रोचते । एतावतः वृक्षान् अहम् इतः पूर्वं न दृष्टवती एव आसम्'' – वीणा अवदत् ।

''वृक्षाः मानवस्य उत्तमाः सुहृदः । किन्तु खेदस्य विषयः नाम मानवः एतत् न अवगच्छति'' इति अवदत् पितामहः ।

''किमर्थं तथा उच्यते तात ?'' – वीणा अपृच्छत् ।

''वृक्षाः फलानि यच्छन्ति । उपकरण-निर्माणाय, इन्धनाय च काष्ठं यच्छन्ति । पर्णानि पशूनाम् आहारः भवति । एवं वृक्षस्य सर्वे अपि भागाः मानवस्य उपकाराय एव । किन्तु मानवः तेषां विषये कृतज्ञतां न वहति ।''

''युक्तम् उक्तं भवता'' – वीणा अवदत् ।

''परिसरं हरिन्मयं कर्तुं भवती अपि सहकर्तुम् अर्हति'' इति अवदत् पितामही ।

''मया किं वा कर्तुं शक्येत ?'' इति अपृच्छत् वीणा ।

''अस्मद्गृहस्य वाटिकायाम् एतावन्तः वृक्षाः कथं प्रवृद्धाः इति किं भवती जानाति ? एकैकं विशेषप्रसङ्गम् अपि निमित्तीकृत्य एकैकः वृक्षः आरोपितः अस्माभिः । भवत्याः माता यदा जन्म प्राप्तवती तदा कश्चन आम्रवृक्षः आरोपितः । भवत्याः जन्म निमित्तीकृत्य उदुम्बरवृक्षः आरोपितः । एवम् अत्रत्यः एकैकः अपि वृक्षः काञ्चित् घटनां स्मारयति ।''

सर्वं शृण्वती वीणा नूतनं पाठं पठितवती आसीत् ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवदर्थ विज्ञानम्

### मषीधरणसमर्थायाः लेखन्याः अन्वेषणम्



पूर्वं दग्धः शलाकाखण्डः लेखनसाधनं भवति स्म । ईजिप्ट्जनैः ऐदम्प्राथम्येन लेखन्याः उपयोगः कृतः । किन्तु अत्युत्कृष्टेन लेखनसाधनेन लेखनीयं चेदपि तत् मषीकूप्यां पौनःपुन्येन मज्जयित्वा आर्द्रीकरणीया भवति स्म ।

इन्शूरेन्स्व्यवहारकर्ता लेविस् वाटर्मनः एतां व्यवस्थां दृष्ट्वा असन्तोषं प्राप्नोति स्म । यदि लेखनी स्वस्य शरीरे एव मषीं कथमपि धर्तुं शक्नुयात् तर्हि वरं भवेत् इति अचिन्तयत् सः । यद्यपि सः विज्ञानी न आसीत् तथापि चिन्तनात् सः अवगतवान् यत् वायुसञ्चाराय कञ्चित् मार्गं मषीसञ्चाराय वलयत्रयं च निर्मितं चेत् लेखन्याः पृष्ठभागस्था मषी लेखनानुगुणतया प्रवहति इति । एतदनुगुणां लेखनीं निर्माय सः १८८४ तमे वर्षे तत्सम्बद्धं स्वाम्यं स्वाधीनं कृतवान् ।

## भवतां परिसरः

### तरक्षुः

यथा अश्वः हेषते इति, शुनकश्च भषति इति च उच्यते तथा तरक्षुः किं करोति इति वदेम ? स च मार्जरकुलीयः । सः हसति इति वक्तव्यं भवेत् । अथवा सः यदा ध्वनिम् उत्पादयितुम् इच्छति तदा हाससदृशं ध्वनिं करोति इति वक्तव्यं स्यात् ।

तरक्षोः पादाः शुनकस्य इव भवन्ति, शरीरं च मार्जारस्य इव भवति । किन्तु तदीयः आकारः न मार्जारस्य इव मृदुमयः, न वा शुनकस्य इव स्नायुमयः । तदीयौ पृष्ठभागस्थौ पादौ भारभूतौ लघ्वाकारकौ च । शिरश्च बृहदाकारकम् उत्कर्णयुतं च । तस्मात् पृष्ठभागस्य औन्नत्यं पुरोभागस्य औन्नत्यादपि न्यूनम् । एतस्य दैर्घ्यं १५० सें.मी.मितम् । औन्नत्यं च ९० सें.मी. मितम् । एषः विरलतया एव मृगयां करोति । प्रायः अन्यैः भुक्तस्य शेषम् एव आधिक्येन सेवते एषः । अतः एव तेन ख्यातिः प्राप्ता अस्ति - 'पशुलोकस्य सम्मार्जकः' इति ।



# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### किमर्थं शुनकेषु विधेयता अधिका ?



शिक्षणं प्राप्तवन्तः शुनकाः विधेयाः भवन्ति चेत् न तत्र आश्चर्यम् । किन्तु ग्राम्याः अपि शुनकाः स्वामिनिष्ठाः, विधेयाः च भवन्ति इति तु आश्चर्याय । मार्जाराः मानवप्रियाः न । किन्तु शुनकाः मानवप्रियाः । तत्र कारणम् अपि अस्ति । शुनकाः वृककुलसम्बन्धिनः । वृकाः च समूहजीविनः । तत्र तैः नायकविषये विधेयता प्रदर्शनीया एव भवति । तत्कुलजाः शुनकाः अपि यदा गृहं प्रविशन्ति तदा तत्रापि ते गृहस्वामिनं नायकं मन्यन्ते, तद्विषये विधेयतां दर्शयन्ति च । मार्जाराः तु मृगयावृत्तिजीविनः । गृहे वासम् एव सुरक्षायै मन्यन्ते ते । स्वतन्त्रतया वासं कर्तुम् इच्छन्तः ते कस्यापि विषये विधेयतां प्रकाशयितुं न इच्छन्ति ।

## भारतम् अवगम्यताम्

अक्टोबर्मासः पर्वबहुलः । अतः एतस्य मासस्य प्रश्नाः सन्ति पर्वाणि अवलम्ब्य

१. कस्मिन् राज्ये 'तीज'पर्व आचर्यते ?
(अ) असाम् (आ) झारखण्ड्
(इ) राजस्थानम्
(ई) मिझोराम् ।





२. विष्णोः कः अवतारः केरलीयेन 'ओणं'पर्वणा सम्बद्धः अस्ति ?
(अ) वामनावतारः
(आ) परशुरामावतारः
(इ) कृष्णावतारः
(ई) नरसिंहावतारः

३. कार्त्तिकपूर्णिमा कस्य जन्मदिनेन सम्बद्धा ?
(अ) महावीरस्य
(आ) बुद्धस्य
(इ) गुरुनानकस्य
(ई) झरतुष्ट्रस्य





४. मैसूरुनगरं कस्य पर्वणः निमित्तं ख्यातम् अस्ति ?
(अ) दुर्गापूजायाः
(आ) नवरात्रोत्सवस्य
(इ) कुम्भमेलायाः
(ई) पोङ्गल्पर्वणः

(उत्तराणि ६६ तमे पृष्ठे)

# चित्रशीर्षिकास्पर्धा



**अधस्तनं चित्रद्वयं दृष्ट्वा परस्पर-सम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**



SOURAA



NARAYANAMURTHY TATA

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -
**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'अगस्त्'मासस्य चित्रशीर्षिकाप्रेषकः

**जितेन्द्रनाथगुरुः**

पद्मपुरम्, राजबोरासम्बरम्
*बरगढ, ओडिशा - ७६८ ०३६*

**पुरस्कृता शीर्षिका**





**अबला न सा, कर्मकुशला**
**कर्मकुशलेव पश्यति बाला**

## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. राजस्थानम् ।

२. वामनावतारः ।

३. गुरुनानकस्य ।

४. नवरात्रोत्सवस्य ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

